सादरं समर्पणम्

* श्रीः *

# मीमांसुकण्ठाभरणम्

## श्रीमद्रामदयालुशर्मविरचितम्

---

पण्डित भगीरथ शर्म विरचित

## रत्नावली टीका सहितम्

---

प्रकाशकः पण्डित देवतादीन शर्म द्विवेदी

ऽधिकाराः प्रकाशक संशोधकाभ्यां स्वायत्तीकृतम् ।

पण्डित जानकीशरण त्रिपाठि द्वारा—

सूर्ययंत्रालये, काश्यां मुद्रितम् ।

मूल्यं पञ्चाणकम् ।-)

सम्वत् १९९० वि० ] [ प्रथमावृतिः सहस्रपरिमिता

* श्रीः *

॥ श्रीमद्रामदयालु शर्म विरचितम् ॥

# मीमांसुकण्ठाभरणम्

जौनपुर मंडलान्तर्गत द्विवेदिपुर वास्तव्य भगीरथ शर्मं विरचित रत्नावली व्याख्या सहितम् ।

संशोधकः—

जौनपुर मंडलान्तर्गत मुंगरा बादशाहपुर वास्तव्यः धन्वन्तरिविद्यालयाध्यक्षः श्री धन्वन्तरि औषधालय संचालकः साहित्य केशरी भूषण आयुर्वेद केशरी, रत्न, न्यायरत्न, व्याकरणशास्त्री पद्वीकः केशरीन्द्र कविः उपनामक पं० आद्या प्रसाद शर्म त्रिपाठी ।

प्रकाशकः—

भदोही मंडलान्तर्गत भूतपूर्व न्यूपएय धर्महितकारिणी संस्कृत पाठशाला प्रधानाध्यापकः श्रीमान् परमपूज्यः स्वांतगुरुः पण्डित देवतादीन शर्म द्विवेदी ।

## श्रीविश्वेश्वरः शरणम् ।

यद्यपि सन्ति धर्मशास्त्रीयाः भूयांसो महत्तरा निबंधास्तथापि तेषु परमतखण्डनमण्डनादिना व्रतादि निर्णये मुह्यन्ति शास्त्रान्तरज्ञानवन्तोऽपि धर्मशास्त्रानभिज्ञाः कतिपयेविद्वांसः तेषामुपकाराय बस्तीमण्डलान्तर्गत भिडराग्राम वास्तव्यो जगदम्बोपासकः सरयू पारीण वंशावतंशः पंडितप्रवरः श्रीराम दयालु शर्मा मीमांसुकण्ठाभरणं नाम लघुभूतं व्रतादि निर्णयेऽतीवोपकारकं धर्मशास्त्र निबंधंग्यबध्नात्, अयश्चग्रन्थः एकदापूर्ववाराणस्यां भाषानुवाद सहितोमुद्रितः, साम्प्रतं जौनपुर मण्डलान्तर्गत द्विवेदपुरवास्तव्य पंडितप्रवर श्रीभगीरथ शर्म विरचितया संस्कृत टीकया । सद्बृष्टीक कर्तृ शिष्येण तपस्विना सदाचार सम्पन्नेन पंडित दैवतादीन शर्मणा प्रकाश्यते । सम्भावयेदनेन लघुभूतेनापिग्रन्थेन बहूनां व्रतानां निर्णयेयाथार्थ्यंनस्यादिति निवेदयते विद्वज्जनान् ।

न्याय-व्याकरणाचार्यः—

**सूर्यनारायणशर्म शुक्लः वाराणसेय सं० पा०**

न्याय शास्त्राध्यापकः ।

## संशोधक प्रार्थनम्

उमाजान्यर्पिता साच्छात्, गुरूणांपादपूजिका ।
क्षात्राणांस्वल्प मूल्याद्धि निर्णयेस्यात्परंविभो ॥ १ ॥

नेत्रदोषात्प्रेसदोषात्, ग्रन्थ त्रुटि विवेकतः,
याच्युतिः सा च छन्तव्या केशरीन्द्र कविःकृते ॥ २ ॥

**विदुषामनुचरः केशरीन्द्र कविः ।**

# भूमिका

इहखलु महा महित सुगुणगरिम्णोऽखिल जगदाधार ब्रह्मणो मनस्य भिनिविष्टाः सर्वधर्मप्रतिपादकाः, जगत्कारणीभूताः, चत्वारोवेदाः, लोकोपकारोन्मुखमहर्षिद्वारा प्रत्यक्षाः बभूवः, तदनुवेदवोधित कर्तव्यतानुशासन प्रतिपादकं जैमिनिः सूत्रयामास ( अथातोधर्मजिज्ञासा ) अस्यार्थश्च वेदाध्ययनानन्तरं वेद प्रति पाद्यस्य धर्मस्य जिज्ञासा कर्तव्या, अतोधर्मप्रतिपादक शास्त्रमारम्भणीयम्, तदनु विवेचनाय मन्वादयः प्रवृत्ताः अथ घोरकलिमागामिनमाशंक्य महाकारुणिकोदयार्द्रचित्तः, पराशरः वेद प्रदिपाद्यधर्मान् वर्णाश्रमाणां पृथक् पृथक् स्थापयामास। अथेदानींस्मृतीनां वाहुल्यात् तत्पठनपाठनाभावाच्च वेदवोधिताऽनेककर्मसुसन्देहः स्यात्। इत्यालोच्य वसती मण्डलान्तर्गतभिडराख्यग्रामनिवासो, शक्त्युपासकशिरोमुकुटालङ्कारः रामदयालु शर्मा सारासार विवेक शून्यानां वालानामनायासेन धर्म्मबोधाय स्मृतिमल्लिकादीननेकग्रन्थानालोक्य तत्सारान्निस्सार्यच मीमांसुकण्ठाभरण नामकं धर्मशास्त्रग्रंथं रचयामास। इति वार्तागुरोः रामभरोस शर्मणो वहुधाश्रुता तत एकदा विद्यापुरनामके ग्रामेदैवात्समधिगतोऽस्मि। अथ तत्र परमधार्मिकः सतीर्थ्योमदीयः। सखा बलभद्रशर्मा रामदयालु शर्मा कृतं मीमांसुकण्ठाभरणनाम धर्मशास्त्रं ममहस्तेऽर्पयतिस्म तदाज्ञानुसारेणास्य ग्रन्थस्य रत्नावलींटीकामहं रचितवान्। इति गुणदोषौ बुधोगृह्णन्निन्दुक्ष्वेडाविश्वेश्वरः। शिरसा श्लाघतेपूर्वं परंकण्ठेनियच्छति। इतिदर्शनात् अत्राखण्ड शास्त्र पारदृश्वानोवुधाः, धीवैकल्यतोलिपि मुद्रणतोवायत्स्खलनं तद्दोषैर्दोषज्ञैरनुकम्पया क्षन्तव्यम्। अथ पठन पाठना दिनामेपरिश्रमं सफलयन्तु सन्तः। इत्याशास्ते यवनपुर प्रान्तीय द्विवेदपुरस्थ विद्वद्वृन्दवशंवदः,।

पं० भगीरथ शर्मा—

॥ श्रीविश्वेश्वरः शरणम् ॥

# मीमांसुकण्ठाभरणम्

## रत्नावलीटीकासहितम्

शम्भुप्रियायाश्चरणारविन्दं
मङ्गल्यमाधाय हृदन्तराले ।
विधीयते रामदयालुनेदं
मीमांसुकण्ठाभरणं सुरम्यम् ॥ १ ॥

हेरम्बं करुणाकरं गजमुखं लम्बोदरं सुन्दरं
नत्वा साम्बशिवं सदा च चतुरां बुद्धिप्रदां शारदाम् ॥
येनादायि तमोपहंच विमलं ज्ञानम्भरोसोत्तरं
रामंवन्द्यपदाम्बुजं द्विजवरं कुर्मोऽत्र कौतूहलम् ॥ १ ॥

मीमांसुकण्ठाभरणस्य दीपिकां ।
रत्नावलीं रामदयालुसूरिणा ॥
प्रोक्तस्य वक्ष्ये करुणापरैर्बुधैः ।
सा क्षम्यतांमेऽस्तिगिरोऽत्र हीनता ॥ २ ॥

अथ श्रौतस्मार्ताद्यनेकधर्मकाण्डसाधकस्यास्य ग्रन्थस्य 'स-
माप्तिकामो मङ्गलमाचरेत' इतिश्रुतिबोधितकर्तव्यताकतयाने

कजन्मोपार्जितानेकदुरितध्वंसकामो रामदयालुशर्मा कृतं मङ्गलं स्वेष्टदेवतास्मरणरूप मुपजाति वृतेनोपनिबध्नाति श-म्भ्विति । शम्भोः प्रिया शम्भुप्रिया तस्या आर्य्यायाश्चरणार-विन्दम्पादयाथोजम्मङ्गल्यम्-शुभास्पदं हृदन्तराले मानसे आधाय संस्थाप्य सुरम्यम् अल्पाक्षरैः प्रचुरार्थविशिष्ट मीमां-सुकण्ठाभरणम् एतन्नामकं धर्मशास्त्रग्रथं विधीयते विरच्यत इत्यर्थः । चरणौअरबिन्दमिवेत्युप मितिसमासः । मङ्गलाय हितं मङ्गल्यम् तस्मै हितमितियत् प्रत्ययः हृदयशब्दपर्य्यायः हृच्छब्दोऽप्यस्ति तस्यान्तरालशब्देन षष्ठीसमासः । रामेति यद्यपि आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृहणीयाज्ज्येष्ठापत्यकलत्रयोः ॥ इतिस्मृतेः । स्वनामोच्चा-रणं निषिद्धं तथापि अभिवादनादौ न दोषाय इति तत्वम् । कूपखानकन्यायेन वा समाधेयम् । मीमांसत इति मीमांसुः विचारवान् । मान विचारणे । इति सन्नन्तादुप्रत्ययः । तस्य कण्ठाभरण शब्देन षष्ठी समासः कण्ठाभरणशब्दः तत्सदृशे लाक्षणिकः इति । सम्बन्धश्चाधिकारी च विशयश्च प्रयोजनम् अवश्यमेतद्वक्तव्यं ग्रन्थस्यादौ चतुष्टयमिति वृद्धोक्तो धर्मो विषयः । मीमांसुरधिकारी । तज्ज्ञानम् । प्रयोजनम् । बोध्यबो-धकभावसम्बन्धः । इति ॥ १ ॥

सूर्य्योदयानन्तरमस्ततः प्राक्
तिथ्यो मुहुर्तत्रयसम्मिताश्चेत् ।
पराश्च पूर्वाश्च तियोः क्रमेण
विध्यन्ति साधारण एष वेधः ॥ २ ॥

वेधस्य समयसंयोगात्प्रायः सर्वत्र सत्वेन स एव प्रथमं निर्णयः इत्याशयेनाह—तत्र तावदिति—तत्र तस्मिन् मीमांसुकण्ठाभरणे आदौ वेधो मलिनीकरणम् तदेव निश्चीयते इति। अत्रायमाशयः तिथिर्द्वेधा पूर्णा खण्डा च—तत्र पूर्णोक्ता स्कान्दे—प्रतिपत्प्रभृतयः सर्वा उदया हृदया द्रवेः। पूर्णा इति विख्याता हरिवासरवर्जिता—इति हरिवासर एकादशी तत्र वेधान्तरं वक्ष्यते। तद्भिन्ना खण्डा तत्रैव वेधनिर्णयः समुचितः इति समयमयूखे॥ अथ वेधविषयक प्रतिज्ञायांवेधः कदेत्युपजात्या दर्शयति—सूर्योदयेति—सूर्य्योदयात्सूर्योदयः कालानन्तरं पश्चात् मुहुर्तत्रितययुक्ताः तिथयः परा उत्तरास्तिथीः विध्यन्ति मलिनयन्ति। अष्टादशनिमेषास्तु काष्ठा त्रिंशत्तु ताः कलाः। तास्तु त्रिंशत्क्षणस्ते तु मुहूर्ताः द्वादशास्त्रियाम् इत्यमरः। अस्ततः प्राक सूर्य्यास्तात्पूर्वम्मुहूर्तत्रयसम्मितास्ताः पूर्वाः तिथीर्विध्यन्ति इति क्रमेणेत्यर्थः एषोऽयंवेधः साधारणः सामान्य इत्यर्थः। तथा चोक्तं स्कान्दे—पक्ष द्वयेपि तिथितः तिथिं पूर्वां तिथोत्तराम्। त्रिभिर्मुहूर्तैर्विध्यन्ति समान्योऽयं विधिः स्मृतः॥ २॥

**दिनकरप्रतिमा यदि नाडिकाः**
**स्युरुरगेशमने च शरेन्दवः।**
**शिवतिथौ वसुचन्द्रमितास्तदा**
**मलिनयन्ति तिथीन् स्वपरानमी॥ ३॥**

अथ साधरण वेधमुक्त्वा द्रुतविलम्बितेन तद्विशेषमाह दिनकरेति—उरगे पञ्चम्यां तिथौ यदि दिनकरप्रतिमाः नाडिकाः द्वादश नाडिकाःस्युः तथैव शमने दशम्यां शरेन्दवः

पञ्चदशनाडिकाः एवं शिवतिथौ चतुर्दश्यां बसुचन्द्रमिता अष्टादश नाडिकाः स्युः तदा अमी तिथयः स्वपरान् स्वेतरान् तिथीन् मलिनयन्ति मलिनान् कुर्वन्तीत्यर्थः स्वोक्त कर्मानहन्तीत्यर्थः—एवमत्राशयः द्वादश नाडीभिः पंचमी पंचदश नाडीभिर्दशमी,—अष्टादशनाडीभिश्चतुर्दशी, इति—तथा चोक्तं स्कान्दे नागो द्वादशनाडीभिर्दिक पञ्चदशभिस्तथा । भूतोऽष्टादशनाडी भिर्दूषयत्युत्तरां तिथिम इति, । तिथिर्द्वयोः इति कोशात् तिथि शब्दस्य पुंस्त्वमपीति ॥ ३ ॥

काष्ठामात्रेण कालेन
द्वितीया गिरिजातिथिम् ।
दूषयत्येव रम्भाया
स्तृतीयां भूषयत्यसौ ॥ ४ ॥

अथ तृतीयायां गौरीरम्भाव्रतयोरनुष्टुभा विशेषमाहकाष्ठेति द्वितीया तिथिः काष्ठामात्रेण काष्ठापरिमितकालेन अष्टादश निमेषास्तु काष्ठेत्यमरः, अष्टादश निमेषमात्रेणेत्यर्थः। गिरजा तिथिः तृतीया गौरीव्रते दूषयत्येव इत्यर्थः । उक्तञ्च ब्रह्मवैवर्ते । रम्भाख्यां वर्जयित्वातु तृतीयां द्विजसत्तम । अन्येषु सर्वकार्येषु गणयुक्ता प्रशस्यते । इति गणश्चतुर्थी । माधवेन गौरीव्रते विशेष उक्तः मुहुर्तमात्रसत्वेऽपि दिने गौरीव्रतं परे । शुद्धाधिकायामप्येवं गणयोग प्रशंसनात्, इति । अथ रम्भाव्रते विशेषमाह असौ द्वितीया काष्ठामात्रेण कालेन रम्भायाः रम्भासम्बधिनीं तृतीयां भूषयति इति अत्रायं विवेकः । तृतीयायां व्रतद्वयमस्ति रम्भाव्रतं गौरी व्रतञ्चतत्र रम्भाव्रते द्वितीयान्विता न ग्राह्येति वेधनिर्णयः ॥४॥-

पूर्वाह्णश्चापराह्णश्च
विभागोऽन्हो द्विधा मतः ।
स्कन्दानुरोधिनामेष
विशेषस्त्वग्रस्य वर्ण्यते ॥ ५ ॥

अथ तिथिनां सामान्यविशेषाभ्यां वेधनिर्णयं संक्षेपतः कृत्वा इदानीं दिनविभागमनुष्टुभा दर्शयितुमाह पूर्वाह्णः इति दिनस्य पूर्वभाग इत्यर्थः । एषोऽह्नो विभागः स्कन्दानुरोधिनां स्कन्द पुराणानुसारिणां द्विधा द्विप्रकारो मतः तथाहि स्कान्दे आवर्त नात्तु पूर्वाह्णोऽपराह्नस्तु तथा परः । मत इति मति-बुद्धीति सूत्रेण मन्यतेर्वर्तमानेक्तः । क्तस्य च वर्तमाने । इत्यनेन स्कदानुरोधिनामिति कर्तरिषष्ठी । तस्य दिनविभागस्य विशेषस्त्वग्रेऽग्रिमश्लोके वर्ण्यते-निरूप्यते ॥ ५ ॥

पूर्वाह्णश्चाथ मध्याह्नोऽ-
पराह्णश्चेति स त्रिधा ।
शातातपानुरोधेन
मन्यते मतिशालिभिः ॥ ६ ॥

अथ शातातपाचार्यमतेऽह्नोविभागस्त्रिधा तन्मत मनुष्टुभा दर्शयितुमाह पूर्वेति पूर्वाह्णो दिनस्य पूर्वभागः मध्याह्नो दिनस्य मध्यभागः अपराह्णश्च दिनस्यान्तिमभाग इति दिनस्य त्रिधा त्रिप्रकारको विभागः शातातपाचार्यस्यानुरोधेनमतेन मतिशालिभिः मत्या शालन्ते शोभन्ते इति ते तैर्मनीषिभि-र्मन्यते स्वीक्रियते । अत्र मन्यतेः कर्मणि लट् कर्तर्येषा तृतीया ।

शातातपमतमाह—माधव तस्माद्दहस्तु पूर्वाह्णे देवाअशनमभ्यवहरन्ति मध्यंदिने मनुष्याः अपराह्णे पितर इति । मनुरपिऊर्ध्वं सूर्योद्‌यात्प्रोक्तं मुहूर्तानां च पंचकम् पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तदनन्तरम् । अपराह्णस्ततः प्रोक्तो मुहूर्तानांच पंचकम् इति ॥ ६ ॥

पूर्वाह्णस्स्यात्सार्द्धयामस्वरूपो
मध्याह्नोऽर्धो यामरूपोऽपराह्णः ।
यामार्द्धात्मा चाथ सायाह्नकालो
यामात्मा स्याद् गोभिलेनेत्थमुक्तम् ॥७॥

अथ गोभिलमतेन चतुर्द्धान्हो विभागस्तन्मतं शालिनी छन्दसाह पूर्वे ति अर्द्धेन चतुर्दण्डात्मककालेन सहितो यामस्वरूपः प्रहरः पूर्वाह्णः अह्नःपूर्वभाग इत्यर्थः । अथो अनन्तरम् यामस्वरूपोऽष्टदंडात्मककालो मध्याह्नः दिनस्य मध्यभाग इत्यर्थः प्रहरमात्रमिति यावत् तदुक्तम् अर्द्धयामस्वरुपोऽर्द्धं प्रहरः अपराह्णः अथ यामात्मा प्रहरस्वरूपः सायंकालो दिनस्यान्तिमभाग इति । इत्थमनेन प्रकारेण गोभिलाचार्येणोक्तम । तथाच गोभिलवचनम । पूर्वाह्णः प्रहरस्सार्धं मध्याह्नः प्रहरस्तथा । आतृतीयाद्दपराह्णः सायाह्नश्च ततः पर इति । अत्रायं विवेकः चतुर्यामात्मकं दिनं मत्वा अर्थात् द्वात्रिंशद्दण्डात्मकमिति तत्र द्वादशदण्डात्मककालस्य पूर्वाह्णसंज्ञा तत ऊर्ध्वं प्रहरमात्रस्य मध्याह्नसंज्ञा ततः परे चतुर्दंडात्मक कालस्यापराह्णसंज्ञा तस्मातपर याममात्रं सायाह्न संज्ञकमिति यावत् ॥ ७ ॥

प्रातस्ततस्संगवमामनन्ति

मध्याह्नमग्रेऽस्य ततोऽपराह्णम् ।

सायाह्नमन्ते सुधियः किलैष

व्यासानुसारो दहनैर्मुहूर्तैः ॥ ८ ॥

अथ त्रिभिर्मुहूर्तैर्व्यासमतेन पञ्चधा प्रातरादि कालमिंद्र वज्रया वर्णयति प्रातरिति । सूर्योदयात् त्रिमुहूर्तैः प्रातः कालम् आमनन्ति कथयन्ति ततस्त्रिमुहूर्तैस्संगवं संगवनामकं कालम् अस्याग्रे त्रिमुहूर्तैर्मध्याह्नम् ततस्तस्याग्रे अपराह्णम् अन्ते दिनान्ते सायाह्नमिति चामनन्ति सुधियः पण्डिताः एषोऽयम् व्यासानुसारः इत्थं संकलने पञ्चकालाः । तथाच व्यासवाक्यम् मुहूर्तत्रितयं प्रातस्तावानेव तु संगवः । मध्याह्नस्त्रिमुहूर्तं स्यादपराह्णोऽपितादृशः त्रिमुहूर्तात्मकं सायमेषकाल विनिर्णयः इति । अथप्रसंगाद्रात्र्यवसाने कालिदासमतेन क्षणादिकालज्ञानं लिख्यते घटीचतुष्कोनमितः क्षणाः क्वचित्प्रातस्ससैकस्त्वरुणोदयः स्मृतः! सैकस्तथोषा समयो घटीद्वयं शेषं खरांशूदयएव कर्मणि इति ॥ ८ ॥

वह्निर्विधातृगिरिजा गणनायनागाः

स्कन्दो दिवाकरपिनाककरौ च दुर्गा ।

वैवस्वतश्च तिथिपाः क्रमतोऽत्र विश्वे

विष्णुस्मरौ शिवविधू पितरस्त्वमायाः ॥ ९ ॥

अथ वसन्ततिलकावृत्तेन तिथिस्वामिनो दर्शयति-वह्निरिति-लोकप्रसिद्धात्वात्तिथयो न स्वरूपेण पठिता किन्तु स्वामिनः

प्रदर्श्यन्ते प्रतिपदो वह्निः। द्वितीयायाः विधाता। ब्रह्मा-तृतीयायाः गिरजा पार्वती। चतुर्थ्याः गणनाथो गणेशः। पंचम्याः नागा स्सर्पाः। षष्ठ्याः स्कन्दः कार्तिकेयः। सप्तम्या दिवाकरः सूर्यः। अष्टम्याः पिनाककरः पिनाकः करे यस्य स शिवः। नवम्याः दुर्गा। दशम्याः वैवस्वतः यमः। एकादश्याः विश्वेदेवाः। द्वादश्याः विष्णुः। त्रयोदश्याः स्मरः कामः। चतुर्दश्याः शिवः। पौर्णमास्याः विधुः चन्द्रः। अमायास्तु पितर। इति एवं क्रमेणात्र शास्त्रे एते तिथिपा तिथीः पान्ति रक्षन्तीति विग्रहे (आतोऽनुपसर्गेकः) इति कप्रत्ययः तदाह वसिष्ठः वह्निर्विधाताद्रिसुतो गणेशः सर्पो विशाखो दितिजो रमेशः। दुर्गा यमो विश्वहरिश्चकामः शर्वो निशेशश्च पुराणदृष्टाः इति। स्वामिनः प्रयोजनं च तत्र देवताप्रतिष्ठापुजादि ॥ ९ ॥

**सम्प्राप्य यामुदयते सविता तिथिः सा**
**स्वल्पापि चेन्निगदिता सकला मुनीन्द्रैः।**
**स्नाने जपे वितरणेऽध्ययने च तस्मा**
**निश्शङ्कमुज्ज्वलधिया सुधियापि मान्या ॥१०॥**

अथ केषु कर्मसूदया तिथिर्ग्राह्येति निर्णेतुं वसन्ततिलकयाह-सम्प्राप्येति सविता सूर्य्यः यांतिथिं सम्प्राप्य उदयते आविर्भवति सा तिथिः स्वल्पापि न्यूनापि चेद्यदि तदा मुनीन्द्रैर्महर्षिपुङ्गवैः स्नाने तीर्थस्नाने जपे गायत्र्यादिजपकरणे वितरणे दाने अध्ययने पठने सकला सम्पूर्णा निगदिता तत्तस्मात्कारणात् उज्ज्वलधिया निर्मलबुद्धिना सुधिया पण्डितेनापि निश्शङ्कं शङ्कारहितं यथा तथा मान्या स्वीकार्या सुधियेति कृत्यानां कर्तरिवा इति षष्ठ्यभावेतृतीया। उक्तञ्च व्रतोपवासस्नानादौ घटिकैकापि या भवेत् उदये सा तिथिग्राह्या विपरीता

तु पैतृके इति, स्कान्दे। अपरमपि तत्रैव। यांतिथिं समनुप्राप्य उदयं याति भास्करः सा तिथिः सकलाज्ञेया दानाध्ययनकर्मसु इति। यांतिथिं समनुप्राप्य यात्यस्तंपद्मिनीपतिः। सा तिथिः तद्दिने प्रोक्ता त्रिमुहूर्तैवया भवेत्॥ इति च॥ १०॥

अथ यामधिगम्य भास्करः
समुपैत्यस्तमसौ च पित्र्यके।
सकला खलु यश्च कर्मणः
समयस्तत्समयं गता तिथिः॥ ११॥

व्यतिपातयुगादिवैधृति-
ग्रहमन्वादिषु सत्स्विह क्रिया।
इह नो सकलत्वमिष्यते।
हरिदश्वोदयमाय गत्वनः॥ १२॥

इदानीं वैतालीयवृत्तद्वयेन पितृकर्मणि व्यतिपातादौ च विशेषमाह अथेति—भास्करः सूर्य्यः यांतिथिमधिगम्य प्राप्य अस्तमदर्शनत्वमुपैति याति। असौ तिथिः पित्र्यके श्राद्धादौ सकला सम्पूर्णा ग्राह्या इत्यर्थः। यतो यस्य कर्मणोयः समयः प्रोक्तः तत्समयंगता तिथिर्ग्राह्येत्यर्थः। उक्तश्च विष्णुना कर्मणोयस्य यः कालस्तत्कालव्यापिनी तिथिः। तथाकर्मणि कुर्वीत ह्रासवृद्धीन कारणमिति। व्यतिपातो योग इति योगप्रकरणे वक्ष्यते-युगादितिथिश्च वक्ष्यमाणः वैधृतिः वैधृतियोगः ग्रहोग्रहणं मन्वादितिथिरपि वक्ष्यते एषु सत्सु क्रियोक्ता सूर्य्योदय मारभ्य सा यज्ञत्वपर्यन्तं सकलत्वं नो इष्यते न मन्यते। व्यति

पात इति पदे ( उपसर्गस्य ) इति दीर्घाभावो बाहुल कादिति ॥ ११ ॥ १२ ॥

जनौ मृतौ पारणदन्तधावने
तथा रताभ्यञ्जनसिन्धुमज्जने ।
गमे च तत्कालगतां तिथिं बुधा
वदन्ति नेहोदयगां न चास्तगाम् ॥ १३ ॥

अथ वंशस्थवृत्तेन जननादिविषये विशेषं दर्शयति-जनाविति जनौ जननसमये मृतौ मरणसमये पारणे व्रतान्तभोजने दन्तधावने निषिद्धा या तिथिः सा दन्तधावने समये चेदित्यर्थः । तथा रताभ्यञ्जने रते मैथुने अभ्यञ्जने तैलादिमर्दने च निषिद्धा या तिथिः सा रत समये अभ्यञ्जनसमये चेदित्यर्थः । सिन्धुमज्जने समुद्रस्नाने गते यात्रायां च तत्कालगतां तत्समय व्याप्तां तिथिं बुधाः पण्डिताः वदन्ति कथयन्ति एषूदयास्तविचारो नास्ति इति तदुक्तं स्कान्दे अभ्यंगे चोदधिस्नाने दन्तधावन मैथुने जातेच मरणे चैव तत्कालव्यापिनी तिथिरिति ॥ १३ ॥

व्रतेषु सर्वेषु निगद्यते बुधैस्त्रिभि-
र्मुहूर्तैःप्रमितोत्तमा तिथिः ।
मुहूर्तयुग्मप्रमिता तु मध्यमा
ततोऽपिहीना न फलाय कल्पते ॥ १४ ॥

अथ वंशस्थवृतेन सर्वेषु व्रतेषु उत्तमां मध्यमामधमां च तिथिमाह-व्रतेष्विति-सर्वेषु निखिलेषु-व्रतेषु त्रिभिर्मुहूर्तैः षड्-

भिर्घटीभिः प्रमिता युक्ता तिथिः उत्तमा फलदा निगद्यते कथ्यते मुहूर्तयुग्मप्रमिता चतुर्दण्डात्मककालेन युक्ता मध्यमा नोत्तमा नाधमेत्यर्थः ततस्तस्मात् मुहूर्तयुग्माद्धीना न्यूना तिथिः फलाय शुभफलदानाय कल्पते न समर्थेने इत्यर्थः फलायेत्यत्र ( क्लिपि-सम्पद्यमाने ) इति चतुर्थी ॥ १४ ॥

त्यक्त्वा यद्वासरांशं निशिपर-
मशनं नक्तमाहुस्तदार्य्या-
स्तस्मिन्तिथ्यो विधेया रजनि
मुखगता नो तथाह्नोर्द्वयोस्स्युः ।
स्युर्वा चेदुत्तरास्ता मुरारिपुतिथिगे
नक्त उक्तोदयस्था
सायं कालानुयाता तिथिरुरु
मतिभिस्सौरनक्ते प्रदिष्टा ॥ १५ ॥

नक्तशब्दो भोजनपरः कालपरत्वे प्रकुर्वीत त्यस्यानन्वयात् तच्च दिनानशनं पूर्वरात्रिभोजनं तत्र प्रदोषव्यापिनी ग्राह्या प्रदोषव्यापिनी ग्राह्या तिथिर्नक्तव्रते सदा इति वत्सोक्तेः तदेव स्त्रग्धरावृत्तेन दर्शयितुमाह त्यक्त्वेतियद्वासरांशं दिन भागं त्यक्त्वा विहाय निशि रात्रौ परं प्रकृष्टमशनं भोजनं तत् आचार्य्याः पण्डिताः नक्तंनक्त व्रतमाहुः तस्मिन्नक्ताशने तिथ्यः रजनिमुखगताः प्रदोषं प्राप्ताः विधेयाः कर्तव्याः यदि तथा द्वयो रह्नोनो स्युः चेद्वा स्युः तदोत्तराः पराः तिथियो विधेयाःकार्या-तदाहव्यासः । त्रिमुहूर्तः प्रदोषः स्याद्भानावस्तंगते सति ।

नक्तंतु तत्र कर्तव्यमिति शास्त्रविनिश्चय इत्युक्त्या रजनिमुख-शब्देन प्रदोषो गृह्यते दिनद्वयव्याप्तां तुपरा उक्तं च कालादर्शे जावालिना उभयोर्यद्दिवा तिथ्योः प्रदोषव्यापिनी तिथिः । तत्रोत्तरत्रनक्तं स्यादुभयत्रापि सा यतः इति । मुररिपुतिथिगे-एकादशीं प्राप्ते नक्तं उदयस्था तिथिरुक्ता तदुक्तं कालादर्शे उदयस्था सदा पूज्या हरिनक्तव्रते तिथिरिति । उरुमतिभि-र्महाबुद्धिभिः सौरनक्ते सूर्यसम्बन्धि नक्तव्रते सायंकालानुयाता सायंकालव्याप्ता तिथिः प्रदिष्टा निर्दिष्टा तदुक्तं सुमन्तुना त्रिमुहूर्तस्पृगेवाह्नि निशि चैतावती तिथिः तस्यां सौरं भवेन्न-क्तमहन्येव तु भोजनम्, इति। यत्तु सायं संध्या त्रिघटिका ह्यस्ता-दुपरिभास्वत इति स्कान्दोक्तसंध्यायां मार्कण्डेयेन चत्वारीमानि कर्माणि संध्यायां परिवर्जयेत आहारं मैथुनं निद्रां स्वाध्यायं च चतुर्थकम् । इतिभोजनं निषिद्धम् तद्रागप्राप्तम् न वैधम् नक्तभोजनम् विधिस्पृष्टे निषेधानवकाशात् इति ॥ १५ ॥

**ऊर्ध्वं नक्षत्रमण्डल्युदयत उदितं भोजनं नक्तमार्यैः**
**सर्वेषां तद्यतीनां तु भणित मुचितं वासरस्याष्टमांशे ।**
**विश्वस्तानां च सौरे निगदितमहन्येव नक्तं प्रदोषः**
**स्यादूर्ध्वं त्वस्तकालादनलमितमुहूर्तात्मको**
**भानवीयात् ॥ १६ ॥**

अथ नक्ते भोजनप्रकारं प्रदोषप्रमाणञ्च स्रग्धरावृत्तेनाह-ऊर्ध्वमिति-आर्यैर्विद्वद्भिर्नक्तं नक्ताशनं नक्षत्रमंडल्युदयतः तारामण्डलीनामुदयात् ऊर्ध्वं उपर्युदितम् कथितम् यतीनां तु यदुचितं नक्ताशनं तद्वासरस्याष्टमांशे दिनाष्टमभागे भणित-मुक्तम् नक्तस्य कालद्वयं दर्शितं भविष्यत्पुराणे-मुहूर्तोनं दिनं-

नक्तं प्रवदन्ति मनीषिणः नक्षत्रदर्शनान्नक्तमहं मन्येगणाधिप इति अस्य च कालद्वयस्याधिकारिभेदेन व्यवस्थामाहदेवलः-- नक्षत्रदर्शनान्नक्तं गृहस्थस्य बुधैःस्मृतम्। यतेर्दिनाष्टमे भागे तस्य रात्रौ विशिष्यत इति। स्मृत्यन्तरे विशेषः यतिश्च विधवा चैव कुर्य्यात्तत्सदिवाकरम्। सदिवाकरं त तत्प्रोक्तमन्तिमे घटिकाद्वये इति। सौरे विश्वस्तानांच सूर्य्यव्रतिनामहनि दिने एव नक्ताशनं निगदितम् एवकारेण रात्रिव्यवच्छेदः। अथ प्रदोषलक्षणमाह भानवीयात् सौरात् अस्तकालात् ऊर्ध्वमुपरि अनलमितमुहूर्तात्मकः षड्दण्डात्मकः कालः प्रदोषः स्यात् त्रिमुहूर्तः प्रदोषः स्यादित्युक्तम् भानोरयम् भानवीयः (वृद्धाच्छः) छस्येयादेशः (ओर्गुण) अवादेश इति॥ १६॥

सर्वेषु चाथ नक्तेषु तिथिश्चेन्नप्रदोषगा
भोजनं यतिवत्सर्वे दिवा कुर्य्युर संशयम्॥ १७॥

अथ प्रदोष व्यापि तिथ्यभावे यतिवद्भोजन प्रकारमनुष्टुभाह-सर्वेष्विति-अथ सर्वेषु। नक्तेषु नक्त व्रतेषु चेद्यदि प्रदोषगा प्रदोष व्यापिनी तिथिर्नभवेत् तदा सर्वे नक्ताशिनः असंशयं संशय रहितं यथा तथा यतिवत् यति तुल्यंभोजनं दिवा अह्नि कुर्य्युः। तथाह माधवः प्रदोष व्याप्त्यभावेगृहस्थोऽपियतिवत्दिवा नक्तमाचरेत्। तदुक्तं स्कान्दे। प्रदोष व्यापिनी न स्याद्दिवानक्तं विधीयते। आत्मनो द्विगुण च्छायमति क्रामति भास्करे। तन्नक्तं नक्त मित्याहुर्न नक्तं निशि भोजनम्। इति॥ १७। इति नक्त निर्णयः।

शुक्ला सर्वाप्युपोष्या
प्रति पदिह बुधैः पूर्वविद्धैव कृष्णा

धात्रा विद्धा पराह्णे यदि भवतिसिता
सातिशस्ता यनोचेत् ।
सायाह्न व्याप्तिसत्वेऽप्यभिदधति
बुधाः पूर्वविद्धा प्रशस्ता
भागोऽयः पञ्चधा सोऽयत्र भवति
खलुवल्युत्सवे पूर्वविद्धा ॥ १८ ॥

अथानन्तरं नक्तनिर्णयानन्तरम् तन्यते कलया यस्मात्तस्मात्तास्तिथयःस्मृताः इति सिद्धान्तशिरोमणिवचनेन वर्द्धमानया क्षीयमाणयाकलया वा तन्यन्ते येकालविशेषास्तास्तिथयः तासां तिथीनां निर्णयस्तिथिनिर्णयः ॥ तत्र तेषु तिथिषु प्रत्यासत्या आदौ प्रथमम् प्रतिपन्निर्णीयते मयेति शेषः अथ तन्निर्णयं स्रग्धरावृत्तेनाह-शुक्लेति बुधैः पंडितैः शुक्ला शुक्लपक्षीया प्रतिपत् चान्द्रःपक्षोमासो वा प्रतिपद्यते प्रारभ्यते यस्यां तिथौ सा प्रतिपत् प्रथमातिथिः सर्वा सम्पूर्णापि उपोष्या उपोषणीया न तु पूर्वविद्धा-अपिशब्दार्थमाह-धात्रेति धात्रा धातृस्वामिकया द्वितीयया पराह्णे यदि विद्धा सिताशुक्लपक्षोद्भवा तदा अतिशस्ता इति बुधाः पंडिताः अभिदधति वदन्तीत्यर्थः विशेषमाह-दिने पञ्चधाविभक्ते अत्रयः चतुर्थो भागः सोऽपराह्णे भवति तदा खलु निश्चयेन वल्युत्सवे पूर्वविद्धा अतिशस्ता तथा च माधवः वल्युत्सवं च पुर्वे द्युरुपवासवदाचरेत । निर्णयसिन्धावपि-शुक्लास्यात्प्रतिपत्तिथिः प्रथमतः चेत्स्यात्पराह्णे भवेत इति। तदभावे तु सायाह्नव्यापिनीपरिगृह्यताम् । इतिकालमाधवः॥ १८॥

सापि स्यादूर्जशुक्ले गिरिवरतनया पूजने सुप्रशस्ता
पूर्वाह्णव्यापिनीसा मुनिभिरभिहिता कर्मकालोयदेषः
यामेभ्य स्त्रिभ्यऊर्द्धं भवतियदितिथिः पारणं प्रातरेव
न्यूनाचेत्तत्समाप्तौ भणितिमिति मुहुर्माधवै-
र्माधवीये ॥ १८ ॥

आर्यापूजनेविशेषमाह- सेति ऊर्जशुक्ले कार्तिकशुक्लपक्षे सापि प्रतिपत्तिथिरपि गिरिवर तनया पूजने पार्वतीपूजने सुप्रशस्ता श्रेष्ठा स्यात् सा पूर्वोक्ता तिथिः पूर्वाह्णव्यापिनी मुनिभिः धर्मशास्त्रज्ञैः अभिहिताकथिता-मानमाह-कर्मेति यद्- यस्मात्कारणात् एषोऽयं कर्मकालः कर्मसमयः अयमत्र भावः अह्नस्त्रेधा विभागः प्रदर्शितः स्कान्दे-ऊर्द्ध्वं सूर्य्योदयात्प्रोक्तं मुहूर्तानां तु पञ्चकम्। पूर्वाह्णः प्रथमः प्रोक्तो मध्याह्नस्तु ततः परम् अपराह्णस्ततः प्रोक्तो मुहूर्तानाञ्च पंचक इति पूर्वाह्णो वैदेवानां मध्यं दिनो मनुष्याणामपराह्णः पितृणाम्। इति श्रुतिः तस्मादह्नस्तु पूर्वाह्णि देवाअशनमभ्यवहरन्ति-इतिशाता तपश्च इत्येतैर्देवार्हःपूर्वाह्णकालः एवेष्टः अतः पूर्वह्णव्यापिनी तिथिर्मूलोक्तिरिति तदेवं पूर्वेद्युः शुक्लप्रतिपदुपवासं कृत्वा परेद्युः पारणं कुर्य्यात् तत्र किम्प्रातः किम्बा तिथ्यन्तं इति निर्णेतुमाह-यामेभ्यइति-यदि त्रिभ्यो यामेभ्यऊर्द्ध्वं त्रियामादुपरि तिथिर्व्रततिथिर्भवति तदा प्रातरेव पारणम् चेद्यदि न्यूनात्रियामाद्धीना तिथिस्तदा तत्समाप्तौ तिथ्यन्ते पारणं व्रतान्तभोजनमिति माधवैर्माधवाचार्य्यैर्माधवीये कालमाधवे मुहुरनुवेलम्भणितमुक्तम् तथाचमाधवः तिथ्यन्ते चैव भान्ते च पारणं यत्र चोद्यते यामत्रयोर्द्ध्ववर्तिन्यां प्रातरेवहि पारणम् ।

तिथि स्त्रियामतोऽर्वाक्चेतिथियन्तेपारणं भवेत्। यामत्रयोर्द्धगामिन्याम् प्रातरेव हि पारणम् इति। इति प्रतिपत्। प्रसंगादत्रैव नव रात्रस्य चतुर्विधत्वमाह ज्योतिर्विदाभरणे कालिदासः। मधौ शुचौ माघ इषे युगक्रमं सितादिरात्र्या नवरात्रिकं व्रतम्। देवीप्रसादं वशया विशाखिलैः कृतं चतुर्वर्गफलप्रदं युगैः। अस्यार्थः मधौ चैत्रे शुचावाषाढे माघे इषे आश्विने युगक्रमं कृतादिचतुर्युगानामनुक्रमेण विशानरेणवशया स्त्रिया अखिलैर्युगैः कृतं सत् चतुर्वर्गफलप्रदं स्यात् कीदृशं देव्या प्रसादो यस्मिन् तत एतेनाश्विन एवोपवासश्चाचरणीय इति।

भवेत्तु पूर्वाह्णसमागता यदा
तदा द्वितीयां कुरुपूर्ववासरे।
यमद्वितीयोर्जसितोदभवा स्मृता
पराहणगा साभिहिता हिता बुधैः॥२०॥

अथ क्रमप्राप्ता द्वितीयोपेन्द्र वज्रावृत्तेन निर्णीयते भवेदिति यदा पूर्वाह्ण समागता पूर्वाह्णव्यापिनी द्वितीया तिथिर्भवेत् तदा पूर्ववासरे ( पूर्वश्चासौ वासरः ) इति कर्मधारयः प्रथम् दिने द्वितीयां द्वितीयाव्रतं कुरुविधेहियदि पराह्णव्यापिनी तदा परदिनेव्रतमिति शेषः। तदुक्तं स्कान्दे प्रतिपत्संमुखी कार्य्या याभवेदापराह्णकी पौर्वाह्णकी च कर्तव्या द्वितीया तादृशी विभो। तादृशी सम्मुखी पूर्वयुतेत्यर्थः उदयं परित्यज्य कियत्पूर्वाह्णभागं प्रक्रम्य प्रवृत्तायाः परेद्युस्त्रिमुहूर्ततायां सत्यामपि परयुतोपवासंभवेतां परित्यज्य पौर्वाह्णकवचनेन पूर्वेद्युरेवोपवासो विधीयत इति माधवः। पूर्वेद्युरस्ततोप्रातः परेद्युस्त्रिमुहूर्तगा। सा द्वितीया परोपोष्या पूर्वविद्धाततोपरेति च

अत्र कृष्णशुक्लभेदेन विशेषः। प्रदर्शितो हेमाद्रौ । द्वितीया तु कृष्णापूर्वा शुक्लोत्तरेति कृष्णाद्वितीयादिमा पूर्वा पूर्वाह्णे यदि सा सिता तु परतः सर्वा इति । दीपिकायाम् । अथ कार्तिक शुक्ल द्वितीयायां विशेषमाह यमेति ऊर्ज्जसितोद्भवा कार्तिक शुक्ल द्वितीया यमद्वितीया स्मृता सा पराह्णगा पराह्णव्यापिनी बुधैः पंडितैः हिताकल्याणकारिणी अभिहिता उक्ताचेत्यर्थःतथा च हेमाद्रिः यमद्वितीयामध्याह्नव्यापिनीपूर्वविद्धाचेति-ऊर्जे शुक्ल द्वितीयायामपराह्णेऽर्चयेद्यमम्-स्नानंकृत्वाभानुजायांयमलोकंन-पश्यति इति-हेमाद्रौ स्कान्दे-यमोयमुनया पूर्वम्भोजितः स्वगृहेऽर्चितः-अतो यमद्वितीया त्रिषु लोकेषु विश्रुता ऊर्जे शुक्ल-द्वितीयायां पूजितस्तर्पितो यमः वेष्टितःकिंकरैर्हृष्टैस्तस्मै यच्छति वांछितम् । श्रावणकृष्णद्वितीयाबृहत्तपेत्युच्यते सा पूर्वविद्धा ग्राह्या तदाह सम्बर्तः कृष्णाष्टमीबृहत्तपासावि त्रीव-टपैतृकी कामत्रयोदशीरम्भाउपोष्या परसंयुता इति द्वितीया।

अन्यत्र रम्भाव्रततस्तृतीया
परैवकार्य्या नतु पूर्व विद्धा ।
याज्येष्ठमासस्य सितातृतीया
रम्भाव्रतं तत्रवदन्ति धीराः ॥ २१ ॥

अथेन्द्रवज्रया तृतीया निर्णीये-अन्यत्रेति-रम्भा व्रततो रम्भा व्रतंविहाय अन्य निखिल कर्मसु सर्वापितृतीया परैव तृतीया युतैव कार्य्या ग्राह्येत्यर्थः पूर्वविद्धा,पूर्व युतातुन-तदुक्तं विष्णु-धर्मोत्तरे एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी । तृतीया अमावस्याचतस्र उपोष्याः परान्विता इति । द्वितीयांशेषसंयुक्तां तृतीयां कुरुतेतु यः । सयाति नरकं घोरंकाल सूत्रं भयंकरम् ।

इति—रम्भाव्रते विशेषमाह-येति-ज्येष्टमास्य शुक्ला शुक्ल पक्षीया या तृतीया सा रम्भाख्या स्मृता पूर्वविद्धा ग्राह्या तत्रैव धीराः पण्डिताः व्रतंवदन्तीति विवेकः । उक्तञ्च माधवेन भविष्ये । भद्रेकुरुष्व यत्नेन रम्भाख्यं व्रतमुत्तमम् । ज्येष्ठ शुक्ल तृतीयायां स्नात्वा नियम तत्परा अपरंच । बृहत्तपात· थारम्भा सावित्री वटपैतृकी । कृष्णाष्टमी चभूता च कर्तव्या संमुखी तिथिरिति स्कान्दे—रम्भाव्रत विषये पक्षान्तरमपि भविष्ये रम्भातृतीयां वक्ष्यामि सर्वपाप प्रणाशिनी। मार्गशीर्षे तथामासि तृतीयायां नराधिप । यदिपरत्रतृतीयानोप लभ्यते तर्हिव्रतान्तरेऽपि पूर्वविद्धोपोष्या तदुक्तं काल माधवे-रम्भा तृतीया पूर्वास्यादुत्तरास्याद्व्रतान्तरे-परेऽह्णिनास्तिचेत्पूर्वविद्धाप्यस्तु व्रतांतर इति ॥ २१ ॥

भाद्रस्य शुक्लस्यतुया तृतीया
गौरी व्रतंतत्रभणंति भव्याः ।
सौभाग्य सम्पत् सुखसन्ततीनां
समृद्धि कृच्चञ्चललोचनानाम् ॥ २२ ॥

अथ भाद्रशुक्ल तृतीयायां गौरीव्रतमुक्तम् तत्रोपजात्या विशेषंवर्णयतिभाद्रस्येति-भाद्रस्य भाद्रमासस्य शुक्लस्य शुक्ल पक्षस्य या तृतीया तिथिः स परान्विता कार्या-चतुर्थी सहिता यातु सातृतीया फलप्रदा । अवैधव्य कराखीणां पुत्रपौत्र प्रवर्द्धिनी । इति माधववचनात् । तत्रभव्यानिपुणा गौरी व्रतं भणन्ति-हरितालिकेतियावत्-तृतीयानभसः शुक्ला मधु श्रावणिका स्मृता । भाद्रस्यकज्जली कृष्णा शुक्ला च हरितालिका ।

इत्यभिधानात् । द्वितीया योगे दोषमाह माधवः । द्वितीयां शेष संयुक्तां यः करोति विमोहिता । सावैधव्यमवाप्नोति प्रवदन्ति मनीषिणाः । अपरश्च । आद्यामधुश्रावणिका कज्जली हरि तालिका चतुर्थीमिश्रितास्त्रीभिर्दिवानक्ते विधीयते । कीदृशी सा चञ्चललोचनानां स्त्रीणां सौभाग्य सम्पत्सुखसन्ततीनां समृद्धि-कृत-वृद्धिकारिणीति ॥ २२ ॥

गिरिजा तिथिर्यदि मुहूर्तसम्मिता

परवासरे कुरुत तद्व्रतं तदा ।

सकलापिचेद्भवति पूर्व वासरे

विरहय्यतां गणपयोग शंसनात् ॥ २३ ॥

अथ मंजुभाषिणीवृत्तेन गिरिजा तिथिविसदयति गिरिजेति गिरिजातिथिस्तृतीया यदिपरवासरे द्वितीय दिने मुहूर्त सम्मिता मुहूर्त परिमित कालान्वितास्यात्तदातद्दिन एवतद्व्रतं गौरी व्रतं कुरुत यूयमितिशेष सातिथिश्चेद्यदिपूर्ववासरे प्रथम दिने सकलापि षष्ठिदंडात्मक कालावच्छिन्नापि भवेत्तदागण पयोगशंसनात् चतुर्थीयोगस्यप्राशस्त्यात् तांतृतीयां विरहय्यत्यक्त्वा तद्व्रतं परवासरे एवकुरुतेति तदाह-समय मयूषे भाद्रशुक्ल तृतीया या हरितालिकोच्यते स मुहूर्तमात्रापि परयुताग्राह्या तदाहवामनः मुहूर्त मात्रसत्वेपिदिने गौरीव्रतंवरे । शुद्धाधिकायामप्येव गणयोग प्रशंसनात् । इति ॥ २३ ॥

इतिमाधव सम्मतंमतं

न बुधानां स्मृति मार्गवेदिनाम ।

सकलां न तिथिं परित्यजे-
दितिमीमांसक भावभावनाम् ॥ २४ ॥

मध्याह्नगां कुरुतचैत्रसितांतृतीया-
मत्रव्रतं निगदितं गणगौरिकायाः ।
श्रीपार्वती शशिकलाभरणा विहार्च्यौ
भक्तेष्ट पूरण पटू विविधोपचारैः ॥ २५ ॥

अथ चैत्र शुक्ल तृतीयायां गणगौरिकाव्रतमस्ति तदेववसन्ततिलका वृत्तेन वर्णयति मध्याह्नगामिति हेबुधाः चैत्रसितां चैत्रशुक्लपक्षगतां तृतीयां मध्याह्नगां मध्याह्न व्यापिनीं स्वीकुरुत तत्रैवव्रतं विधत्तेतिभावः अत्रतृतीयायाम् गणगौरिकाया गणेन सहितायाः पार्वत्याः व्रतमुपवासोनिगदितमस्ति इहास्यां तृतीयायां श्रीपार्वती शशिकला भरणौ उमामहेश्वरौ विविधोपचारैर्नानोपचारै रर्च्यौ पूजनीयौकीदृशौ भक्तेष्टपूरणपटू भक्ताभिलाषपूरण समर्थौ चैत्र शुक्ल तृतीयायां गौरीमीश्व संयुताम् संपूज्यदोलोत्सवं कुर्य्यात् । इतिनिर्णयसिन्धौ मधौशुक्ल तृतीयायां जानकी भरणं प्रभुमिति प्रकृत्यसैवगौरी तृतीया । इयमेव च गौरीतृतीयोच्यते इति । समय मयूषेतत्रैव । निर्णयामृतेदेवीपुराणेऽपिच । तृतीयायां यजेद्देवीं शंकरेणसमन्विताम् । कुंकुमागुरु कर्पूरमणिवस्त्र सुगन्धिभिः । स्रग्गन्ध धूपदीपैश्च दमनेन विशेषतः आन्दोलयेत्ततो वत्सं शिवोमातुष्ट्ये सदा । इति ॥ २५ ॥

परैव सर्वापि चतुर्थ्युपोष्या
हेरम्बनागाचलकन्यकानाम् ।
व्रतेषुमध्याह्नगतैवस्मात्
निर्णीतमेवं खलुमाधवीये ॥ २६ ॥

अथ चतुर्थीपर विद्धाग्राह्या युगभूतानाम् इतियुग्मवाक्यात् तद्देवोपजात्याह-परैवेति-सर्वासम्पूर्णा अपिच्चतुर्थी परैवपरयुतैव उपोष्या उपोषणीया तदुक्तं माधवीये वृद्धवसिष्ठः एकादशी तथाषष्ठी अमावस्या चतुर्थिका उपोष्या परसंयुक्ता पराः पूर्वेण-संयुताः । इति । हेरम्बनागाचल कन्यकानाम् । हेरम्बोगणेशः नागः सर्पः अचलकन्यका गौरीतद्व्रतेषु साचतुर्थी मध्याह्नगता मध्याह्नव्यापिनी ग्राह्या । तदाह गोविन्दार्णवे देवलः । युगं मध्यन्दिनेयत्र तत्रोपोष्य फणीश्वरान् । क्षीरेणाप्यास्य पंचम्यां पूजयेत्प्रयतोनरः इति चतुर्थीगणनाथस्य मातृविद्धाप्रशस्यते मध्याह्न व्यापिनी चेत्स्यात्परतश्चेत्परेऽहनि । इति माधवेगुरुः । गौरीव्रतेतु पूर्ववोक्तम् । गणेशगौरीवहुला व्यतिरिक्ताः प्रकीर्तिताः । चतुर्थ्यः पञ्चमी विद्धादेवतान्तर्योगतः इति ब्रह्मवैबर्ते ॥ २६ ॥

मध्याह्नगाचेदुभयोरयाह्नोर्भवेन्न वाचेद्गणनायकस्य ।
पूर्वैवनागस्यतु सापरैव गौरी व्रते नागयुता निषिद्धा २७

अथोपजात्या गणेशव्रते विशेषं दर्शयति-मध्येति-चेद्यदि चतुर्थी उभयोरह्नोर्द्दिनद्वये मध्याह्नगा मध्याह्नव्यापिनी भवेत्तदा गणेशस्य व्रते पूर्वैव पूर्वयुक्तैवग्राह्या । अथचेन्नवा तदापि

पूर्वैव तदाह माधवः। यदादिनद्वयेऽप्येतद्वैषम्ये मध्याह्नैक देश व्यापिनी तदा पूर्वदिने तन्महत्वं चेति तदेवोपा देयम् उत्तर दिनेतन्महत्वे किंमहत्वगुणेन तदुपादेयम् किम्बामातृ विद्धत्व-गुणेन पूर्वमुपादेयम् इति संशये पूर्वमितिब्रूमः। परस्य नाग विद्धत्व दोषोपेतत्वात्-पूर्वस्य चतदभावात्। एतदुक्तं स्कन्दे-ज्येष्ठाचवटसावित्री तथानंग त्रयोदशी विनायक चतुर्थीच कर्तव्या संमुखी तिथिरिति नागस्यतु नागव्रतेतु साचतुर्थी परैवपर युतैव कार्य्या गौरीव्रतेतु नागयुतापंचमी युक्ता निषिद्धा गणेशगौरीत्यादिनेति ॥ २७ ॥

**गौर्य्याश्चतुर्थीतपसः सितास्यात्त-**
**त्रैवढुंढिव्रतमुक्तमार्य्यैः।**
**ढुंढिव्रतेरात्रि मुखान्विता सा**
**नक्तंयदेतन्मुनिभिर्निरुक्तम् ॥ २८ ॥**

अथ चतुर्थ्यांव्रत वाहुल्यात् तत्रैवेन्द्र वज्रया गौरीचतुर्थी-माह-गौर्य्या इति-तपसो माघस्य सिताशुक्ल पक्षीया चतुर्थी गौरीचतुर्थीस्यात् तत्रैव चतुर्थ्यामेव आर्य्यैः पण्डितैः ढुंढिव्रतं ढुंढिराजस्य गणेशस्यव्रतमुक्तम्-साचतुर्थी ढुंढिव्रते रात्रिमु-खान्वितासायंकालव्याप्ता ग्राह्या तत्रमान माह-यदिति-यद्यस्मा-न्मुनिभिरेत्तन्नक्तं नक्तव्रतं निरुक्तम् इति-माघशुक्लचतुर्थी तिलचतुर्थी सा प्रदोषव्यापिनी ग्राह्येतिनिर्णयसिन्धुः। माघशुक्ल चतुर्थ्यान्तुनक्त व्रतपरायणाः येत्वांढुंढेऽर्चयिष्यन्ति तेऽर्च्या-स्युरसुरद्रहाम् इत्युक्तम् काशी खण्डे-गौरीचतुर्थी विषये मानम्-नारदीय पुराणम्-माघशुक्लचतुर्थ्यान्तु गौरीमाराधये

द्धर्थः । चतुर्थी व्रतदानाम गौरीतत्र सुपूजिता इति-इतिकालमाधवे तत्रैवगणेशपूजापि लिंगपुराणे कालमाधवे-चतुर्थ्यान्तु-गणेशस्य गौर्य्याश्चैव विधानतः । पूजा कृत्वा लभेत्सिद्धिंसौभाग्यं च नाः क्रमात्-भविष्यतपुराणेऽपि-विनायकंसमभ्यर्च्य चतुर्थ्यांयदुनन्दन । सर्वविघ्नविनिर्मुक्त कार्यंसिद्धिमवाप्नुयात् इति ॥ २८ ॥

या श्रावणस्यासितपक्षगासा
संकष्टपूर्वाभिहिता चतुर्थी-
चन्द्रोदय व्याप्तिमती विधेयो
भयत्रचेदस्ति नवास्तिपूर्वा ॥ २९ ॥

अथोपजात्या संकष्ट चतुर्थी निर्णीयते-या श्रावणेति-श्रावणस्यासित पक्षगः श्रावणशुक्लपक्ष गामिनी या चतुर्थी सा संकष्टपूर्वासंकष्ट चतुर्थी अभिहितः कथिता पण्डितैरिति शेषः । श्रावण कृष्णचतुर्थी संकष्ट चतुर्थीयुच्यते-साचन्द्रोदयव्यापिनीग्राह्येति समयमयूषस्तदाह चन्द्रोदयेति साचतुर्थी चन्द्रोदय व्याप्तिमती विधूदय व्यापिनी विधेयाकर्तव्येति तदाहस्कान्दे श्रावणे बहुलेपक्षे चतुर्थींतु विधूदये । तस्मिन्दिनेव्रतं कार्य्यंसंकटाख्यंसुरेश्वरि इति । चेद्यदि उभयो रहोरस्तितदा पूर्वा नवास्तितदाविपूर्वैवतदाह समयमयूषे दिनद्वये चन्द्रोदये सत्वेऽसत्वे वा पूर्वैव मातृ विद्धागणेश्वरः इतिवचनात् ॥ २९ ॥

असिताथ नभस्य भवावहुला
कृतिभिः कथितागणनाथतिथिः ।
परवेधमिहातितरां सुधियः
परिभावयता शुभकारिपरम् ॥ ३० ॥

अथ भाद्रकृष्ण चतुर्थी वहुला मध्यदेशे प्रसिद्धासायाह्न व्यापिनी ग्राह्यादिनद्वयेसत्वेतु पूर्वाग्राह्येति कमलाकरः तदेवतोट कवृत्तेन दर्शयति असितेति अथनभस्यभवा भाद्रमासोद्भवा असिता गणनाथतिथिः चतुर्थ्यां वहुलावहुलाख्या कृतिभिः पंडितैः कथिता होसुधियः इहचतुर्थ्यां परवेधं पंचमीवेधम् अतितरामतिशयेन अशुभकारि अमंगलकरं परिभावयत जानीत एतदुक्तं समय मयूषे भाद्रकृष्ण चतुर्थ्यां वहुलाव्रतं तत्रपूर्वैव तदुक्तं गोविन्दार्णवेपुराण समुच्चये। गौर्य्याश्चतुर्थीवटधेनुपूजा दुगर्चिनं दुर्भरहोलिकेच। वत्सस्यपूजा शिवरात्रि रेताः परान्विताघ्नन्तिनृपं सराष्ट्रम् इति। अत्रवत्सपूजायाः पृथगुपादानात् धेनुपूजाशब्देन वहुलाख्यागृह्यते-इतिभट्टकमलाकरः।

**वहुलाख्येव्रतेकार्य्या सायाह्नव्यापिनी तिथिः।**
**दिनद्वयेऽपितद्व्याप्तावव्याप्तौवाम्बिकान्विता। ३१।**

अथानुष्टुभा वहुलाचतुर्थी कदा कार्य्यातदेव निर्णीयते चतुर्थी वहुलाख्येव्रते सायाह्नव्यापिनी चतुर्थीग्राह्या दिनद्वयेपि तद्व्याप्तौ चतुर्थी प्राप्तौ तदा अम्बिकान्विता तृतीयायुता ग्राह्या वापक्षान्तरे अव्याप्तौ तथापितृतीयायुतैवेति। दिनद्वये सत्वे पूर्वा ग्राह्या इतिकमलाकरः उपलक्षकत्वादसत्वेऽपि सैवेति-भाद्रशुक्ल चतुर्थी रविभौमाभ्यांयुक्ता महतीत्युच्यते तदुक्तं गोविन्दार्णवे वराहेण-भाद्रेशुक्ल चतुर्थीया भौमेनार्केणवायुता। महती सात्रविघ्नेशमर्चित्वेष्टं लभेन्नरः। अत्रैवेन्दु दर्शन मनिष्टमुक्तम् तत्रैवमार्कण्डेयेन भाद्रेमासिसितेपक्षे चतुर्थीस्वाति योगिनी। मिथ्याभिशायं कुरुतेदृष्ट चन्द्रान संशयः। इति ॥३१॥

करकेपि पदातु सा चतुर्थी
कथिताकार्तिक कृष्णपक्षगाया।
उदये शशिनोऽभिवर्तमानां
कुरुतामून्न च पन्नगेन युक्ताम् ॥ ३२ ॥

अथ कार्तिक कृष्ण चतुर्थी करक चतुर्थी सा चन्द्रोदय व्यापिनी ग्राह्या तदेव वसन्ततिलका वृत्तेनदर्शयति करकेति कार्तिक कृष्ण पक्षगाया चतुर्थी सा करकोपपदा करकाख्या प्रसिद्धा तां चतुर्थी शशिनश्चन्द्रस्य उदये आविर्भावे अभिवर्तमानां प्राप्तां कुरुत हेवुधा इतिशेषः। पन्नगेन नाग स्वामिकया पञ्चम्यायुक्तां न च तृतीयायुक्तातु समीचीनेतिभावः। मातृ विद्धाप्रशस्यत इतिवचनात् एतदाहकमलाकरः। कार्तिक कृष्ण चतुर्थी साचन्द्रोदय व्यापिनी ग्राह्या दिनद्वये सत्वे पूर्वातत्रैव पूजाद्याम्नानात्। इति ॥ ३२ ॥

सर्वास्वपि चतुर्थीषु शंखपालादि पन्नगान्।
सम्पूज्योपोष्य पंचम्यां पारणामाचरेद्बुधः ॥ ३३ ॥

अथ सर्वासु चतुर्थीषु शंख पालादि पूजा मनुष्टुभाह-सर्वास्विति सर्वासुनिखिलासु चतुर्थीषु शंखपालादि पन्नगान्सर्वान संपूज्य पूजां विधाय उपोष्य च बुधः पंचम्यां पारणं व्रतान्तभोजनमाचरेत् कुर्य्यात् इति। एतत्पूजा प्रकारः कुर्मपुराणे प्रदर्शितः इतिमाधवेन प्रोक्तम्। तिथौयुगाह्वयायांच समुपोष्ययथाविधि। शंखपालादिनागानां शेषस्य च महात्मनः पूजाकार्य्यागंध पुष्प क्षीराप्यायनपूर्वकम्। विषाणितस्यनश्यन्ति नचतान्घ्नन्तिपन्नगाः। युगाह्वया चतुर्थी ॥ ३३ ॥

भौमे चतुर्थी शशिलांछनेमा-
वुधेऽष्टमी भास्वति सप्तमीचेत् ।
भवन्ति सूर्यग्रहणेनतुल्या
दानार्चनादौवहुपुण्यदास्ताः ॥ ३४ ॥

अथ प्रासंगिक मेतत्तिथि वार योगेन ग्रहणतुल्य फल माहोपजात्या भौमेचेति भौमे चतुर्थी शशिलाञ्छने चन्द्रे अमा अमावास्या वुधेऽष्टमी भास्वति सूर्य्ये सप्तमी चेद्भवतितदाताः तिथयः दानार्चनादौ वहुपुण्यदाः कीदृशाः सूर्यग्रहणेन तुल्याः सदृशाइत्यर्थः तदुक्तं शंखेन अमावास्यातुसोमेन सप्तमी भानुनासह। चतुर्थी भूमिपुत्रेण सोमपुत्रेण चाष्टमी चतस्रस्तिथयो ह्येताः सूर्यग्रहणसंनिभाः स्नानं दानं तथा श्राद्धं सर्वं तत्राक्षयं भवेदिति ॥ ३४ ॥ इति चतुर्थी ।

पूर्वैवपंचम्यखिलव्रतेषु
स्कन्दव्रतेसाभिहिता परैव ।
नागार्चने स्कन्दयुतैव कार्य्या
मध्याह्नगासावृषि पूजनेऽपि ॥ ३५ ॥

अथोपजातिवृत्तेन पंचमीतिथिर्निर्णीयते-पूर्वैवेति-अखिल व्रतेषु सकलोपवास कार्येषु पूर्वयुतैव चतुर्थी सहितैवग्राह्या· तथाचहारीतः। चतुर्थीसंयुता कार्य्यापंचमीपरवानतु । दैवेकर्मणि पित्र्येच शुक्लपक्षेतथासिते इति-पंचमी चतुर्थीयुतैवग्राह्यायुगभूतानाम्-इतियुग्मवचनात्-व्राह्मेऽपि-प्रतिपत्पंचमी भूतसावित्रीवट पूर्णिमा। नवमी दशमी चैवनोपोष्यापरसंयुता इति-

स्कन्दव्रते-स्कन्दः स्वामिकार्तिकः तस्यव्रते परैवपरयुतैवेत्यर्थः-
तथाचहारीतः। स्कन्दोपवासेस्वीकार्य्या पंचमी परसंयुतेति-
नागार्चने सर्प पूजायां स्कन्दयुतैवषष्ठीयुवतैव कार्य्या इत्यर्थः-
श्रावणशुक्लपंचमी नागपञ्चमीत्युच्यते सापरविद्धा ग्राह्या-
तदुक्तं चमत्कारचिन्तामणौ-पंचमीनाग पूजायां कार्य्या षष्ठी
समन्विता। तस्यांतुतुषितानागा इतरासाचतुर्थिका। प्रताप
मार्तण्डेस्मृत्यंतरेपि श्रावणे पंचमी शुक्ला साप्रोक्ता नागपंचमी।
ताम्परीत्यज्यपंचम्यः चतुर्थीसहिताहिताः इति ऋषिपूजनेपि
सापंचमीमध्याह्नगा मध्याह्नव्यापिनी हितेति-तथाचहारीतः
पूजाव्रतेषुसर्वेषु मध्याह्न व्यापिनी तिथिरिति॥ ३५॥

नभसिसितेस्यादुरगसपर्य्या-

ऋषिगणपूजातुसितनभस्ये॥ ३६॥

अथकदानागपंचमीकदाचऋषिपंचमीतिविवृणोति शशिवद-
नावृत्तेन-नभसीति-नभसि श्रावणेसितेशुक्लपक्षेउरगसपर्य्या
नागपूजास्यात्-तदाहगोविन्दार्णवे भविष्ये-श्रावणेमासिपं-
चम्यांशुक्लपक्षेनराधिप। द्वारस्यो भयतोलेख्यागोमयेनविषो-
ल्वणाः सपर्य्याप्रकारोपितत्रैव-पूजयेद्विधिवत्क्षीर दधिदूर्वां-
कुरैः कुशैः गंधपुष्पोपहारैश्च ब्राह्मणानांचतर्पणैरिति ऋषिगण-
पूजा ऋषीणांगणास्तेषां पूजातु सितेनसहितोनभस्यः तस्मिन्
इति-भाद्रशुक्लपक्षे इतियावत्तत्रैवस्यात् तदुक्तम् समय
मयूखे-भाद्रशुक्लपंचमी ऋषिपंचमीत्युच्यते-तदुक्तंब्राह्मे-नभस्ये
शुक्लपक्षेतु यदाभवतिपंचमी। नद्यादिके तदास्नात्वा कृत्वानि-
यममेवच ब्राह्मणी क्षत्रिया वैश्या शूद्रावापि वरानने। कृत्वा-
नैमित्तिकंकर्मगत्वानिजगृहं पुनः। वेदिंसम्यक् प्रकुर्वीत गोमये

नोपलिप्यताम्। रंगवल्लि समायुक्तां नाना पुष्पोपशोभिताम् तत्रसप्त ऋषीन्दिव्यान् भक्तियुक्ताः प्रपूजयेत्॥ ३५॥

भुजंगविद्धोगिरिजासुतव्रते
पतंगविद्धस्तु गुहव्रतान्तरे।
पतंगवे धानुपलम्भसम्भवे
भुजंगविद्धोऽपिविधीयतां बुधैः॥ ३६॥

अथषष्ठी सर्वेषूपवास व्रतादिषु स्कन्दव्रतेपूर्वविद्धा व्रतान्तरेपरविद्धाचेत्युभयमुपेन्द्रवज्रयाह भुजंगेति-गिरिजासुतव्रते स्वामिकार्तिकव्रते भुजंग विद्धः, भुजंगस्सर्पस्तेनविद्धो दूषितः अर्थात्पंचमीविद्धा षष्ठीगुहव्रते इष्टेतितदुक्तं समयमयूषे-आषाढ़शुक्लषष्ठी स्कन्दषष्ठीत्युच्यते सापंचमी युताग्राह्या-कल्पतरौ भविष्येतु-येयंभाद्रपदे मासिषष्ठीस्याद्भरतर्षभ। योऽस्यांपश्यति गांगेयं दक्षिणा पथवासिनम्। गांगेयः स्वामि-कार्तिकेयः इत्युक्तम्-तस्माद्भाद्रीयापिषष्ठी स्कन्दषष्ठीतिल-भ्यते इति कृष्णाष्टमीस्कन्दषष्ठी शिवरात्रीश्चतुर्दशी। एताः पूर्वयुताकार्य्यास्तिथ्यन्तेपारणंभवेत् इतिस्कान्दे गुहव्रतांतरे गुहव्रतादन्यत् इतिगुहव्रतान्तरम् तस्मिन् पतंगविद्धः पतंगः सूर्यः लक्षणया तत्तिथिः सप्तमी अथसप्तमीविद्धाषष्ठी इष्टेतिभावः तदाहमाधवः तत्रतत्रख्यादि व्रतेषु परविद्धा ग्राह्या तदुक्तं विष्णुधर्मोत्तरे एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावस्यातृतीयाच ता उपोष्याः परान्विताः इति पतंगवेधानुपलम्भ सम्भवे पतंगशब्देन सूर्य्य स्वामिकसप्तमी तद्वेधाभावे अर्थात्क्षय वशात् सप्तमीवेधाभावे गुहव्रतवत्

व्रतान्तरेपिक्षयवशात् उत्तर विद्धा षष्ठीनलभ्यतेतदा स्कन्द व्रतवदन्यान्यपि व्रतानि नागविद्धायां कर्तव्यानि तदाह वसिष्ठः एकादशीतृतीयाच षष्ठीचैवत्रयोदशी पूर्वविद्धानु कर्तव्या यदिनस्यात्परेऽहनीति ॥ ३६ ॥

**स्याद्धलषष्ठीकृष्णेनभस्ये ।**

**पन्नगवेधोनेह शुभाय ॥ ३७ ॥**

अथ शशिवदनयाहलषष्ठी निर्णीयते स्याद्धलषष्ठीति कृष्णेन कृष्णपक्षेनसहितोनभस्यः तस्मिन्हल षष्ठी स्यात् इहास्यांहलषष्ठयां पन्नगवेधः पंचमीवेधः शुभायशुभंकर्तुं न-भव त इ.ति तदाह भट्टकमलाकरः। भाद्रकृष्ण षष्ठीहल् षष्ठी सा सप्तमीयुतेति दिवोदासः। ब्राह्मेऽपि नहिषष्ठीनाग विद्धाकर्तव्यातुकदाचन। नागविद्धातु या षष्ठी कृतापुण्यक्षया-भवेदिति। ३७॥

**इषासिता स्कन्द तिथिः करेरवौ**

**भवेत्तुया भूसुतपानधातृभैः ।**

**समन्विता सौकपिलेति कथ्यते**

**व्रतीहसूर्य्यंभगवन्तमर्चयेत् ॥ ३८ ॥**

अथवंशस्थवृत्या योगविशेषेण कपिला षष्ठीनिर्णीयते इषेति इषस्याश्विनस्य या कृष्णा स्कन्दतिथिः षष्ठी करे हस्तेरवौसूर्येसति भूसुतोभौमः पातोव्यतीपातः धातृभंरोहिणी एतैः समन्विता चेत्तदासौ कपिलाषष्ठी इतिकथ्यते व्रती उपोषकः इहास्यां कपिलायां भगवन्तंसूर्यमर्चतेत्पूजयेत्, इति एतदुक्तंवराहेण नभस्यकृष्णा पक्षेयारोहिणीपातभूसुतैः ।

युक्ता षष्ठीपुराणज्ञैः कपिला परिकीर्तिता । व्रतोपवासनियमै-भास्करं तत्रपूजयेत् । कपिला चद्विजाग्राय दत्वा क्रतुफलं लभेत् । इति, अत्रदर्शान्तत्वेन, महालयो, भाद्रपद कृष्णपक्षो ज्ञेयः इत्युक्तम् निर्णयामृते हेमाद्रौ चेति ॥ ३८ ॥

स्कन्देन विद्धं तपनं विपश्चितः
सदा विदध्युर्निखिलव्रतेष्वथ ।
न स्कन्दविद्धो यदि लभ्यतेतदा
सशम्भुविद्धोऽपिविधीयतां बुधैः ॥ ३९ ॥

अथ सप्तमी निर्णीयते, सा सर्वत्र पूर्वविद्धा, ग्राह्या षण्मुन्योः' इति युग्मवचनात् तद्देवेन्द्रवंशावृत्तेन, निर्णीयते, स्कन्देनेति, विपश्चितः पण्डिताः स्कन्देन षष्ठ्या विद्धम् दूषितम् तपनम् तपनः सूर्य्यो लक्षणया तत्तिथिम्, सप्तमी तिथिम् निखिलव्रतेषु विदध्युः स्वीकुर्य्युः अत्रानेक देवता व्रतमस्ति अतश्चोक्तम् निखिल इति यतः वैशाख शुक्ल सप्तम्यां जह्नुनाजाह्नवी स्वयम् । क्रोधात्पीता पुनस्त्यक्ता कर्णरन्ध्रात्तु दक्षिणात् तान्तत्र पूजयेद्गंगां देवीम् गगनमेखलाम् । पूर्वयुक्तत्वे प्रमाणं स्कान्दे । षष्ठ्यायुता सप्तमी च कर्तव्या तात सर्वदेति अथ यदि स्कन्द विद्धोनलभ्यते अर्थात् सप्तमी यदि षष्ठीविद्धानोपलब्धा तदा सशम्भु विद्धः, अष्टमीविद्धाऽपि सप्तमी बुधैः पण्डितैः विधीयताम् तथाहमाधवः यदापूर्वेद्युरस्त पर्य्यन्ता षष्ठी परेद्युस्तिथिक्षयेणास्तमयादर्वाग् षष्ठी त्रिमुहूर्त्ता तदा पूर्वविद्धाया अलाभादुत्तर विद्धायाश्च प्रति-षिद्धत्वात् कुत्रानुष्ठानमितिचेत् निषेधमुल्लंघ्याप्युत्तर

विद्धाया मिति ब्रूमः यद्यपिप्रमाण वचना भावस्थापि शेषि लोपन्या यत्वादुत्तर विद्धागौण कालत्वेन स्वीकर्तव्येति ॥३९॥

सप्तमी या तपः शुक्ल सम्भवा सा चला मता

उपोष्य पूजयेत्तत्र सूर्यं पुत्राप्तये बुधः ॥ ४० ॥

अथानुष्टुभा अचला सप्तमीनिर्णीयते सप्तमीतिथयः शुक्ल सम्भवा माघशुक्लोत्पन्ना या सप्तमी सा अचला अचलाख्या मता इष्टा तत्र, उपोष्य व्रतंविधाय बुधः पण्डितः पुत्राप्तये सुतोपलब्धये सूर्यम्, पूजयेत् अर्चयेत् इति तदाह चन्द्रिकायाम् विष्णुः । सूर्य ग्रहणतुल्यातु शुक्ला माघस्य सप्तमी । अरुणोदय वेलायां तस्यांस्नानं महाफलम् इति यद्यपिपुत्रार्थं सूर्यपूजानोप लभ्यते क्वापि तथापि तत्रैव भविष्येभास्करं हृदयं ध्यात्वा इमंमंत्र मुदीरये दिति स्मृत्या पूजायाश्चानेक फलजनकत्वेन सून्वर्थमपि सूक्त मितितत्वम् ॥ ४० ॥

कृष्णाष्टम्यखिलव्रतेष्वभिहिता
पूर्वैव शुक्ला परा दूर्वाष्टम्युदिता
सितापि कृतिभिःपूर्वैव भाद्रोद्भवा ।
ज्येष्ठा योगवती त्वियं यदिभवे-
ज्ज्येष्ठा व्रतंस्मर्य्यते ऽस्यामेव पराथ
पूर्व संहिता वा शक्रयोगाद्भवेत् ॥ ४१ ॥

अथाष्टमी निर्णीयते सा कृष्णा पूर्वा शुक्लापरा ग्राह्या इति शार्दूलविक्रीडितेनाह कृष्णेति कृष्णाष्टमी कृष्ण पक्षाष्टमी

सर्वापि अखिलव्रतेषु सर्वदेवतोद्देश्योपोषणेषु पूर्वैव पूर्वविद्धैव सप्तमी युतैवेतियावत् अभिहिता कथिता कृतिभिः पण्डितैः इति शुक्ला शुक्ल पक्षाष्टमीतु परा परयुताकार्य्या नवमी युतेति यावत् तदुक्तं मयूषे नैगमः । कृष्णपक्षेऽष्टमी चैत्र कृष्ण पक्षे चतुर्दशी। पूर्वविद्धैव कर्तव्या परविद्धान कुत्रचित्। तथैव शुक्लपक्षेऽष्टमी चैत्र शुक्लपक्षे चतुर्दशी। पूर्वविद्धान कर्तव्या कर्तव्यापरसंयुतेति । दूर्वाष्टमी सितापि शुक्ल पक्षोत्पन्नापि पूर्वैव पूर्वविद्धैव कृतिभिः पण्डितैः उदिता कथिता ग्राह्येति तदुक्तं मयूषे । भाद्र शुक्लाष्टमी दूर्वाष्टमी इति । तथाच भविष्ये शुक्लाष्टमी तिथिर्यातु मासि भाद्रपदे भवेत्। दूर्वाष्टमी तु साज्ञे यानोत्तरा सा विधीयते । इयं च पूर्वविद्धा तदुक्तं वृहद्यमेन श्रावणी-दुर्गनवमी दूर्वाचैव हुताशनी। पूर्वविद्धा प्रकर्तव्या शिवरात्रि-र्वलेर्दिनम् इति। अत्र विशेष विधिः समय मयूषे इयं भाद्र शुक्लाष्टमी यदाज्येष्ठा योगवती ज्येष्ठा नक्षत्रेणयुक्ता भवेत् तदा अस्यामष्टम्या मेव ज्येष्ठाव्रतं स्मर्य्यते सा च पूर्वा ग्राह्या परावेति सन्देहे आह अथेति शाक्तयोगात् परा परयुता पूर्व सहितावा भवेदित्यर्थः—तदाह लिङ्ग पुराणे कन्यार्के याऽष्टमी शुक्ला ज्येष्ठर्क्षे महतीस्मृता। अलक्ष्मी परिहाराय ज्येष्ठातत्र प्रपूजयेत्। तथा मासि भाद्रपदे शुक्ले पक्षे ज्येष्ठर्क्षे संयुक्ते यस्मिन कस्मिन दिने कुर्य्याज्ज्येष्ठायोपरिपूजनम्। ज्येष्ठा-योगवती इति ॥ ४१ ॥

ऊर्द्धं मध्याह्नतश्चेत्किय दपि
वलि भिद्भंपरे वासरे स्यात्

तत्रैवाथोऽन्यथापूर्वं दिवस
उदितार्कान्विताऽतीवशस्ता
सर्वेष्वेसाथ मासेष्वभिदधति बुधाः
शम्भु शक्त्युत्सवाख्यम्
कृष्णे शुक्लेपिपक्षो व्रतमिह
भणितमस्तौपरै वातिशस्ता ॥ ४२ ॥

अथ स्रग्धरा वृत्तेन ज्येष्ठव्रते विशेषमाह ऊर्द्धवमिति मध्याह्नात् ऊर्द्धवम्, उपरि कियदपि कियत्काल पर्य्यन्तम् अणुरपीति यावत् । वलिभिद्धं ज्येष्ठानक्षत्रम् यदि परेपरस्मिन्वासरे स्यात् तदा तत्रैव परवासरे एव ज्येष्ठायोगवती उदिता कथिता चेद्यदि अर्कान्विता सूर्य्यवार युक्ताअतीव शस्ता प्रशस्ततराज्ञेया, इति तदुक्तं स्कान्दे नभोऽष्टम्यांयदावारो भानोर्ज्येष्ठर्क्षमेवच । नीलज्येष्ठेतिसा प्रोक्ता दुर्लभासर्वकालिकेति अथ बुधाः सर्वेषु मासेषु कृष्ण पक्षे शुक्ले शुक्लपक्षेपि शम्भुशक्त्युत्सवाख्यम्, एतन्नामकं व्रतम् शम्भोः शिवस्य शक्त्यादेव्याश्चोत्सवव्रतादि इहाष्टम्याम् भणितमस्ति सा परैव परयुतैव अति शस्ता अत्यन्तमंगलदायिनी इति अभिदधाति वदन्तीत्यर्थः तत्पठ्यते पद्मपुराणे अष्टमीनवमीयोगे महोत्साहे महोत्सवे । शिवशक्त्रे पक्षयोरुभयोरपीति माधवः ॥ ४२ ॥

भाद्रे कृष्णाष्टमीया भवतिमुररिपु
स्तत्रजातोर्द्धरात्रे

तस्माज्जन्माष्टमी साकृतिभिरभि-
हितासा निशीथानु याता ।
आदेया धीरवर्य्यैरुभय दिवसयो
श्चेत्तथात्वाऽतथात्वे
ग्राह्याविद्वौः परासौ द्रुहिणभवुधयुक्
चेदतीव प्रशस्ता ॥ ४३ ॥

भाद्रकृष्णाष्टमी द्वेधा जन्माष्टमी जयन्ती च तत्रकेवला जन्माष्टमी रोहिणीयुक्ता जयन्ती च तत्राद्यं स्रग्धरा वृत्तेन दर्शयति भाद्र इति भाद्रे भाद्रमासे कृष्णे कृष्णपक्षे या अष्टमी भवति तत्राष्टम्याम् अर्द्धरात्रे नीशीथे मुररिपुः कृष्णो जातः प्रादुरासीत् तस्माद्धेतोः कृतिभिः सुधीभिः सा अष्टमी जन्माष्टमी अभिहिता। उक्ता सा च धीरवर्य्यैः पण्डितैर्निशीथानुयाता अर्द्धरात्रव्याप्ता आदेया ग्राह्या इत्यर्थः उभत्रार्द्धरात्रिव्याप्तित्वे कदा सा ग्राह्या इत्यत आह उभयेति चेद्यदि उभयदिवसयोर्दिनद्वये तथात्वे अर्द्धरात्रव्याप्तित्वे अतथात्वे अर्द्धरात्र व्याप्तित्वाभावेच विद्वद्भिःपण्डितैः परा पर दिनार्द्धरात्र व्यापिनी ग्राह्या इत्यर्थः। एतदुक्तम् भविष्योत्तरे मासिभाद्रपदेऽष्टम्याम् निशीथेकृष्णपक्षगे। शशांगे वृषराशिस्थे ऋक्षेरोहिणि संज्ञके योगेऽस्मिन् वसुदेवाद्धि देवकीमामजीजनत् । इति कालमाधवे तथात्वाऽतथात्वे मान माहमाधवः। यातु दिन द्वयेऽपिनिशोथव्यापिनी तस्यामुभयत्र निशीथयोगस्य रात्रियोगस्य चतुल्यत्वान्नानेकवचनेन निर्णयस्सम्भवति तस्मान्न्यायः परिशिष्यते न्यायश्च परेद्युरुपवासं प्रापयति सङ्कल्पकालमारभ्य तिथि

सद्भावात् इति तथात्वे प्रमाणम् अतथात्वेतु ननुपूर्वे द्युर्निशीथादूर्ध्वमारभ्यपरेद्युर्निशीथादर्वाग् या समाप्यते तस्या मुभयत्ररात्रिसम्बंधित्वात्कुत्रोपवास् इति चेत् परेद्यु रिति ब्रूमः उभयत्रनिशीथव्याप्त्यभावस्य रात्रिसम्बन्धस्य च तुल्यत्वेपि परेद्युः प्रातस्सङ्कल्पकालमारभ्य वर्तमानतया प्राशस्त्यं द्रष्टव्यम् इति यथाकेवलाष्टमी फलनिर्णय आदृतस्तथा नक्षत्र युक्तिथौ वारविशेष योगस्यततोऽपिप्राशस्त्यम् इत्यत आह असाविति असौ जन्माष्टमी चेत् यदि द्रुहिणभवुधयुक् द्रुहिणो ब्रह्मा तस्य भंरोहिणी बुधः सौम्यः ताभ्यां युक्ता तदा प्रशस्ता अतिशय शस्तानिरुक्तावुधैरितिशेषः तदुक्तं पाद्मे यैः कृता श्रावणे मासे । अष्टमीरोहिणीयुता । किं पुनर्बुध वारेण सोमेनापि विशेषतः । तत्र जन्माष्टमी नित्या ये नकुर्वन्ति जानन्तः कृष्ण जन्माष्टमी व्रतम् । तेभवन्तिनराः प्राज्ञ व्याला व्याघ्राश्चकानने जयन्त्यपिनित्या काम्याच तत्रनित्यास्कान्दे शूद्रान्नेनचयत्पापं शवहस्तस्थभोजने । तत्पापंलभते कुन्ति जयन्ती विमुखोनरः काम्याप्युक्ता स्कान्दे महाजयार्थं कुरुतां जयन्तीं मुक्तयेऽथवा । धर्ममर्थंच कामञ्चमोक्षञ्च मुनि पुङ्गव ददाति वांछितानर्थान् ये चान्येऽप्यतिदुर्लभा इति व्रता करणे प्रत्यवायः स्मर्य्यते गृध्रमांसं खगंकाकं श्येनं च मुनि सत्तम । मांसं वा द्विपदांभुक्तं कृष्ण जन्माष्टमीदिन इति ॥ ४३ ॥

निशीथगापूर्वदिनेऽष्टमी यदा
सरोहिणी चेत्पर वासरे भवेत्
निशीथगैवद्रियतेसदाबुधैस्स
रोहिणीपण्डितमानिभिर्नृभिः ॥ ४४ ॥

अथ पूर्वार्द्धरात्रेऽष्टमीयोगोऽपरत्र च रोहिणी योगः इत्यु-
भयोः प्रसंगेकदा जन्माष्टमी व्रत विधिरित्याह वंशस्थवृत्तेन
निशीथेति यदा यस्मिन् काले पूर्वदिने पूर्वञ्च तदेव दिनम्
तस्मिन्, निशीथगा निशीथंगच्छतीति निशीथगा अर्द्धरात्र-
व्यापिनी अष्टमी पर वासरे द्वितीयदिने चेद्यदि सरोहिणी
रोहिणी युक्ता अष्टमीभवेत् अर्थात् रोहिणीयुक्ताप्यष्टमी
निशीथात् प्राक् समाप्यते तदाबुधैः पण्डितैः निशीथगैवा-
द्रियते अर्द्धरात्र व्यापिन्येवाष्टमी स्वीक्रियते नोत्तराः पण्डित
मानिभिः नृभिः । आत्मानं पण्डितं मन्यन्ते इति पण्डित-
मानिनः, तैर्जनैः ( आत्ममानेखश्च ) इतिचाणिनिः सरोहिणी
रोहिणी युक्ताष्टमी आद्रियत इत्यर्थः । तदुक्तं समय मयूखे ।
यदातु पूर्वेद्युरोहिणी रहिता निशीथगा च तिथिः परेद्युः
रोहिणी सहिता निशीथगा स्पृक्च तदा पूर्वैव ग्राह्या कर्म काल
शास्त्रस्य सर्वापेक्षया प्रावलयस्थ सर्वग्रन्थ सिद्धत्वात् रोहिणी
योगेतु प्राशस्त्यात् फलातिशयमात्रम् नतु तस्य निर्णयोपयो
गिता नवमी बुधवारवत् अन्यथाप्रेतयोनिगतानाञ्च प्रेतत्वंना-
शितंनरैः । यैः कृता श्रावणे मासि अष्टमी रोहिणी युता इति
किम्पुनर्बुधवारेण सोमेनापि विशेषतः । किम्पुनर्नवमीयुक्ता
कुलकोट्यास्तु मुक्तिदा। इति एवञ्च जन्माष्टमी व्रतेतु
सत्यप्युत्तरदिने निशीथ व्यापिन्या अष्टम्या रोहिणी योगे
पूर्वदिने च केवलाया निशीथयोगे पूर्वैव ग्राह्येति कालमा-
धवेऽपि-जन्माष्टमी व्रते तिथिरेव निमित्तम् जयन्ती व्रतेतु
रोहिणी योगः । नतु जन्माष्टमीत्यस्मिन्नपिव्यवहार योग एव
विवक्षितव्यः नक्षत्रयुक्तायामेव तिथौ देवकी नन्दनस्योत्पत्तेः
मैवम्-तज्जन्मन्यष्टम्याएव प्रधान प्रयोजकत्वात्-रोहिणी

योगयो विद्यमानयोरपिबुधवारादिव उपलक्षणत्वात् अतएव जन्माष्टमीत्येव समाख्यायते अन्यथा जन्म रोहिणी जन्मयोग इतियोग इतिवासमाख्यायेत इति ॥ ४४ ॥

तिथृक्षयोरवसिता बुभयोःप्रशस्तं
मध्यन्तु पारणमिहैकतरावसाने ।
येतूत्सवान्तमधिगम्यतदाचरन्ति
विन्दन्तितेनुकियदस्य फलन्नविद्मः ॥ ४५ ॥

अथ पारकर्म। समाप्तो इति धातोर्निष्पन्नः पारणशब्दः उपवास रूप कर्म समाप्तौ वर्तते तदेववसन्त तिलकावृत्तेन निर्णीयते तिथृक्षयोरिति—तिथिश्च ऋक्षश्च तिथृक्षेतयोरवसितौ अवसाने पारणं व्रतांतभोजनम् प्रशस्तम् हितकरं निरुक्तम् । तदुक्तं स्कन्दपुराणे-तिथिनक्षत्र नियमे तिथिभान्ते च पारणम् । अतोऽन्यथा पारणेतु व्रतभंगम वाप्नुयादिति । वह्निपुराणेऽपि—जयन्त्यां पूर्वविद्धायामुपवासं समाचरेत् । तिथ्यन्ते वोत्सवान्ते वा व्रतीकुर्वीत पारणम् । द्वयोर्मध्ये एकतरावसाने तिथ्यन्ते भान्तेवापारणमिहशास्त्रे मध्यंमध्यम फलदं निगदितम्-तदाहमाधवः—तिथेर्वानक्षत्रस्य वा शेषकाले पारणमप्रतिषिद्धम् । तदुक्तंब्रह्मवैवर्ते—अष्टम्यामथरोहिण्यांनकुर्य्यात्पारणंक्वचित् । हन्यात्पुराकृतंकर्म उपवासार्जितंफलम् इति । तिथिरष्टगुणं प्रोक्तं नक्षत्रञ्चचतुर्गुणम् । तस्मात्प्रयत्नतः कुर्य्यात्तिथिभान्ते च पारणम् इति—अथ येव्रतिनस्तूत्सवान्तम्, अधिगम्य प्राप्य तत्पारणमाचरन्ति कुर्वन्तितेऽस्य व्रतस्य कियत्फलं विन्दन्ति लभन्ते इति वयंन विद्मोन जानीमः इति ॥ ४५ ॥

आश्विनासितभवातुयाष्टमी
तत्रवारिधसुताव्रतंजगुः।
तत्रसा शशधरोदयोत्तरा
शस्यतेऽनलमुहूर्त सम्मिता ॥ ४६ ॥

अथ आश्विन कृष्णाष्टमी महालक्ष्म्यष्टमी भणिता तन्नि-र्णयं रथोद्धतांवृत्तेनाह—या आश्विनासितभवा आश्विन कृष्णपक्षोत्पन्ना अष्टमी महा लक्ष्म्यष्टम्यभिहिता। तत्राष्टम्यां वारिधिसुताव्रतं लक्ष्मीव्रतंजगुः कथयामासुः पण्डिता इति शेषः तदाहकृत्यसार समुच्चये-भाद्रकृष्णाष्टमीमारभ्या शिवनकृष्णाष्टमीं यावत महालक्ष्मी पूजनं व्रतं चेतितत्र व्रतेसा-ष्टमी शश धरोदयात् चन्द्रोदयात्—(शशधरो नक्षत्रेशः) इत्यमरः। उत्तरापरा अनल मुहूर्तसंम्मिता त्रिमुहूर्तयुक्ता चेत्तदा शस्यते। उक्तञ्च निर्णयामृते-पूर्वावा पर विद्धा वा ग्राह्याचन्द्रो-दये सदा। त्रिमुहूर्तापि सा पूज्या परतश्चोर्द्ध्वं गामिनी—तत्रव्रतमुक्तंसमुच्चयेऽपि-श्रियोऽर्चनम्भाद्रपदेऽसिताष्टमी प्रारभ्य कन्यामगने च सूर्य्ये। समापयेत्तत्रतिथौच यावत् सूर्य्यस्तु पूर्वार्द्धगतोयुवत्याः कन्या मगते सिंहस्थे॥ ४६॥

अष्टमीषु सितपक्षसम्भवा
सूरिभिर्निगदिता महाष्टमी।
अम्बिकार्चन मिहाचरेद् बुधो
नोपवास इहपुत्रिणोहितः॥ ४७॥

अथाश्विनशुक्लाष्टमी महाष्टमीत्युच्यतेतत्र पूजैवकार्य्या-नतु व्रतमितिरथोद्धतयाह-अष्टमीति—इषसितपक्ष सम्भवा आश्विन्य शुक्लपक्षोत्पन्ना अष्टमी सूरिभिः पंडितैः महाष्टमी निगदिता । इहाष्टम्याम्-अम्बिकार्चनं लक्ष्मी पूजनमाचरेत् कुर्य्यात्-इहाष्टम्याम् उपवास उपोषणम्-पुत्रिणे पुत्रवते हितोन कल्याण करोनेत्यर्थः केवलाष्टम्युवासस्तु पुत्रवतानकार्य्यस्त दुक्तं कालिका पुराणे उपवासं महाष्टम्यां पुत्रवान्न समा-चरेत् । यथा तथा वा पूतात्मा व्रतीदेवीं प्रपूजयेत् इति-साचा ष्टमी सप्तमीयुता नग्राह्या—तदुक्तंदेवी पुराणे-सप्तमीशेषसंयु-क्तायैः कृतातुमहाष्टमी । पुत्रदार धनैर्हीना भ्रमन्तीह पिशाच्च वत् । इति-ब्रह्मवैवर्तेऽपि-शुक्लपक्षेष्टमोचैव शुक्लपक्षे चतुर्दशी । पूर्वविद्धान कर्तव्यापर संयुतेति ॥ ४७ ॥

दुर्गाभक्ति तरंगिणी प्रभृतिषुग्रन्थेषु यद्वर्णितम्,

दुर्गायाव्रत मिष्टदायि नवमी पूर्वैवतत्रोदिता

शुक्लेयामधुमासि रामनवमी श्रादित्यमध्याह्नयुक् ।

शस्तासौयदि पूर्ववेधसहिताहेयातदावैष्णवैः ॥ ४८ ॥

अथ वसुरन्ध्रयोरिति युग्म वचनान्नवमी पूर्वयुता ग्राह्येति तदेव शार्दूल विक्रीडितेनाह दुर्गेति दुर्गायाः भगवत्याःनवमी व्रतम् इष्टदायि मनोरथदायकम् इति दुर्गाभक्ति तरंगिण्यादिषु ग्रन्थेषु यद्वर्णितम् तत्रतस्मिन्व्रते नवमीतिथिः पूर्वैव अष्टमी-युतैव उदिता कथिता तदुक्तम् ब्रह्मवैवर्ते अष्टम्या नवमीविद्धा कर्त्तव्या फलकांक्षिभिः नकुर्य्यान्नवमीतात् दशम्यातुकदाचन इति । अथ शुक्ला या रामनवमी सा परविद्धा मध्याह्न व्यापिनी

ग्राह्येति तदाह शुक्ल इति । मधुमासि चैत्रे मासे शुक्ले शुक्लपक्षे या रामनवमी रामजन्म नवमी सा आदित्य मध्याह्नयुक् पुनर्वसु मध्याह्नकालावच्छिन्नाशस्ता हितकारिणी तदुक्तमगस्तिसंहितायाम् चैत्रे शुक्लातुनवमी पुनर्वसुयुतायदि । सैव मध्याह्नयोगेन महापुण्यतमा भवेदिति । असौ रामनवमी यदि पूर्ववेधसहिता अष्टमीयुक्ता तदावैष्णवैः विष्णु परायणैर्हेया-त्याज्या । समयमयूखे विशेषः उच्चस्थे ग्रहपञ्चके सुरगुरौसेन्दौ नवम्यांतिथौलग्ने कर्कटके पुनर्वसुदिने मेषंगते पूषणि । निर्दग्धुं निखिला पलाशसमिधो मध्याद्योध्यारणे राविर्भूतमसूतपूर्व विभवं यत्किञ्चिदेकंमहः । ज्योतिर्विदाभरणे कालिदासोऽपि चैत्रे सिताद्विदलगा नवमी व्रतेस्याच्छ्रीरामजन्म समयेतदुपोषणंसदिति । वैष्णवैरिति वैष्णवपदोपादानेन पूर्ववेध सहिताष्टमी स्मार्तैर्विधेयेतिध्वन्यते । रामार्चन चन्द्रिकायां विशेषः विद्धैवचेद्वृक्षयुक्ता व्रतंतत्रकथम्भवेत् विद्धानिषिद्ध श्रवणान्नवमी चेतिवाक्यतः । वैष्णवानांविशेषात्तुतत्रविष्णु परैरपि । दशम्यादिषुवृद्धिश्चेद्विद्धात्याज्यैववैष्णवैः । तदन्येषां च सर्वेषां व्रतन्तत्रैव निश्चितम् । अत्र दशम्यादिपुवृद्धिश्चेत् इति तदन्येषामिति च वदन् यदा प्रातस्त्रिमुहूर्ता नवमी दशमी च क्षयवशात् सूर्य्योदयात प्रागेव समाप्यते तदा स्मार्तानांतत्रैव एकादशी निमित्तोपवासात् नवमी व्रताङ्गपारणा लोपः स्यात् अतोऽष्टमी विद्धैव स्मार्तैः वैष्णवानां त्वरुणोदय विद्धैकादश्या-हेयत्वान्नपारणा लोपप्रसङ्ग इति । द्वितीयैवतैः कार्येति सूचयति इति भट्टकमलाकरः—दशमी वृद्ध्यभावेऽष्टमी विद्धायाएव मध्याह्नव्यापित्वेक्षये च वैष्णवैरपिविद्धैवोपोष्या इत्यर्थसिद्धम् ॥ ४८ ॥

अकृतौप्रत्यवायस्य श्रवणान्नित्यमीरितम् ।
कृतौफल श्रुतेःकाम्यं श्रीरामनवमीव्रतम् ॥ ४८ ॥

अथ रामनवमी व्रताकरणे प्रत्यवायः करणेतु फलमित्यनुष्टुभाह अकृताविति—अकृतौ रामनवमी व्रतस्याकरणे प्रत्यवायस्य पापस्य श्रवणात् श्रुतेः नित्यंध्रुवम् ईरितम् कामाय मनोरथायहितमित्यर्थः । उक्तश्चागस्तिसंहितायाम्—यस्तु रामनवम्यान्तु भुंक्ते मोहाद्विमूढधीः । कुम्भीपाकेषुघोरेषुपच्यते नात्र संशय । इति प्रत्यवायश्रुतेर्नित्यम् चैत्रे मासिनवम्यान्तु जातो रामः स्वयं हरिः । पुनर्वस्वृक्ष संयुक्तास्तिथिः सर्वकामदा । इति फलश्रुतेः काम्यमपितत्रैव श्रीरामनवमी प्रोक्ता कोटिसूर्यग्रहाधिकेति । अस्य पारणा दशम्याम् उक्ता कालिदासेन रिक्तां समुक्ष्यदशमी किलपारणायामायुः प्रजास्ववृषवागपवर्गदास्यात् श्रीरामजन्म सममन्यमहाव्रताख्यं नोपोषितं तनुमहोत्सवगीतमेतत् इति । वृषोधर्मः वाक् सरस्वती ॥ ४६ ॥

आश्विनशुक्ले या नवमी सा ।
सूरिगणैः प्रोक्तामहतीति ॥ ५० ॥

अथ महानवमीमक्षरपंक्तया दर्शयति-आश्विनेति-अश्विन शुक्ले आश्विन्यशुक्लपत्ते या नवमी तिथि सासूरिगणैःपण्डित समूहैः ( इति शब्द प्रकरण प्रकर्षादि समाप्तिषु ) इतिकोषात्-इति प्रकर्षेण महतीप्रोक्ता-उक्तश्च 'भविष्ये तस्मादियं महापुण्या नवमी पाप नाशिनी-उपोष्या सु प्रयत्नेन सततं सर्वपार्थिवैः, इति तत्र दुर्गा पूजयेत्-सा पूर्व विद्धा ग्राह्या-श्रावणी दुर्गनवमी दूर्वाचैवहुताशनी । पूर्व विद्धा प्रकर्तव्याशिवरात्रिर्बलेर्दिनम् ॥५०॥

कृष्णापूर्वैव शुक्लारवि तनय
तिथिःपूर्वविद्धानिषिद्धा
ज्येष्ठेसौशुक्लपक्ष भवति दशहरा
स्येहयोगाः दशैते ।

ज्येष्ठः शुक्लोवृषार्कौ यम तिथि
बुधहस्तर्क्ष कन्येन्दु पाताः
सानन्दा स्युर्गराख्योऽभिद
धतिसुधियःकेचनारञ्चवारम् ॥ ५१ ॥

अथ सम्पूर्णा दशमी कार्य्या परया पूर्वयाऽथवा । युक्ता न दूषिता यस्मादिति सर्वतोमुखी । इत्यङ्गिरः स्मृतेरयं विकल्पो-व्यवस्थितः—शुक्लपक्षे तिथिग्राह्या यस्यामभ्युदितोरविः । कृष्णपक्षे तिथिर्ग्राह्यायस्यामस्तमितोरविरिति । तदेवस्रग्धरया दर्शयति-कृष्णेति-रवितनय तिथिः-रवेस्तनयोयमः तस्यतिथिः दशमी सा कृष्ण कृष्णपक्षीया पूर्वैव पूर्वयुक्तैव ग्राह्या—शुक्ला शुक्लपक्षीया दशमी तु पूर्वविद्धा नवमी युक्ता निषिद्धाहेया उपवासेतु सर्वमतेपूर्वं वेति तदुक्तं शिवरहस्ये नागविद्धातु याषष्ठी शिव विद्धातु सप्तमी । दशम्येकादशीविद्धानोपोष्यासा कथञ्च नेति अथ ज्येष्ठे ज्येष्ठमासे शुक्ले असौदशमी दशहराख्या भवति इहास्यां दशम्यामेते वक्ष्यमाणा-दश योगा भवन्ति—अतोदशहरा लोके ख्यातिः तथा च दश योगान् हरति इति विग्रहे कर्मणः शेषत्व विवक्षायाम् हरतेः पचाद्यच् के दश योगाः तानाह—ज्येष्ठो ज्येष्ठमासः शुक्लः शुक्लपक्षः वृषार्कः यम

तिथिर्दशमी बुधो बुधवारः, हस्तर्क्षम्, कन्येन्दुः कन्याचन्द्रः, पातोव्यतीपातः, आनन्दः आनन्द योगः गरोगर करणम्, तदुक्तं स्कान्दे-ज्येष्ठेमासिसिते पक्षे दशम्यां बुधहस्तयोः। व्यतीपाते गरानन्दे कन्या चन्द्रे वृषेरवौ दशयोगेनरः स्नात्वा सर्वपापैः प्रमुच्यते, इति मूलकाराशयः—परमयंपक्षो नश्रेष्ठः, यतः, दशपापानि हरति इति दशहरा यतो भविष्ये—ज्येष्ठेमासि सिते पक्षे दशमी हस्त संयुता। हरते दशपापानि तस्मात्दशहरा स्मृतेति। एतांनि दशपापानि हरत्वं देविजाह्नवि। दशपापहरा यस्मात्तस्माद्दशहरास्मृता इति तस्यां स्नानं प्रकुर्वीतदानं चैवविशेषतः। दशपापानि-चाह मनुः पारुष्यमनृतंचैवपैशून्यञ्चा पिसर्वशः। असम्बद्ध प्रलापश्च वाङ्मयंस्याच्चतुर्विधम्प्रदत्ताना-मुपादानं हिंसा चैवाविधानतः। परदारोपसेवा च कायिकं त्रिविधंस्मृतम्। परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् वितथाभिनिवेशश्चत्रिविधं कर्ममानसम् इति। तेनदशपापानि हरतिनाशं प्रापयति इतिदशहरा शब्दार्थः—अथ केचन सुधियः पण्डिताःआरं कुजम् वारमभिदधति वदन्तीत्यर्थः—तथा च वराहः—दशमीशुक्ल पक्षे तु ज्येष्ठे मासिकुजेऽहनिअवतीर्णा यतः स्वर्गात् हस्तर्क्षे चसरिद्वरा हरतेदश पापानि तस्मात् दशहरा स्मृता ॥५१॥

इषसिता दशमी विजयाभिधा
निगदितापर वेधमिह त्यजेत्।

श्रवणयुक् परएव पदायसा
हनितदातु परैवविधीयताम् ॥५२॥

अथ द्रुत विलम्बितेन विजया दशमी निर्णीयते इष सितेति—इषसिता आश्विनस्य शुक्ला दशमी विजयाभिधा विजयाख्या निगदिता प्रोक्ता आचार्य्यैरितिशेषः—किञ्च इहास्यां दशम्यांपर वेधम्—एकादशी वेधम्—त्यजेत्—तदुक्तं हेमाद्रौस्कान्दे - आश्विने शुक्लपक्षे तु दशम्यांपूजयेन्नरः। एकादश्यां न कुर्वीत पूजनञ्चापराजितम्। ज्योतिर्वाभरणे कालिदासः—अथाश्विने या दशमी निशामुखे शुक्लास्मृता सा विजया बुधैरिह। अर्कान्वितां वोधियुतां शमीमुत क्षितीश्वरः सर्वजनश्च पूजयेत्। अर्कान्विताम् अर्कऋक्षयुक्ताम् वोधियुताम् अश्वयुक्ताम् इयंशमी पूजा यात्रादौ नक्षत्रोदय व्यापिनी ग्राह्येति समय मयूखे रत्नकोशे उक्तम् ईषत्संध्यामतिक्रान्तः किञ्चिदुद्भिन्नतारकः विजयो। नामकालोऽयं कर्मकार्यार्थसाधकः इति—अथ यदा सा दशमी परे परस्मिन्नेवाहनि श्रवण युक् श्रवणनक्षत्रा वच्छिन्ना नतु पूर्वदिने तदापरैवपर युक्तैव विधीताम्। क्रियतामित्यर्थः—तदुक्तं समयमयूखे मदनरत्ने दक्षेण परदिने एकादश मुहूर्त व्याप्त्यभावेऽपिश्रवणयोगश्चेन्तदैव यात्रा कार्या पूजातु पूर्वदिनएव—उदये दशमी किञ्चित्सम्पूर्णैकादशी यदि। श्रवणर्क्षंयदाकाले सातिथिर्विजयाभिधा इति ॥५२॥

एकादशीतु नित्या काम्याचोक्तेष्टदा धीरैः।
अकृतावेनःश्रवणादिष्टप्राप्तिश्च तेश्चकृतौ ॥ ५३ ॥

अथैकादश्युपवासो नित्यः काम्यश्चोक्तः स एवोपगीत्या निर्णीयते-एकादशी-धीरैः पण्डितैः एकादशीतु एकादशी तिथिस्तु नित्या उक्ता काम्या च कीदृशी एकादशी इष्टदा इष्टान् कामान् ददातीति कामदेत्यर्थः कुतः अकृतौ एकादशी व्रताकरणे

एनः श्रवणात पापश्रुतेः कृतौ व्रतकरणेतु इष्टप्राप्तिश्रुतेः, मनोरथोपलब्धिश्रवणात् । तत्र, नित्ये सनत् कुमार बचनम्-नकरोतिहियो मोहादेकादश्यामुपोषणम् । सनरो नरकं याति रौरवं तमसा वृतम्-काम्यस्तुकौर्म्ये-यदीच्छेद्विष्णुसायुज्यं श्रियं सन्ततिमात्मनः । एकादश्यां न भुञ्जीत पक्षयो रुभयोरपि इति । इतिबचनद्वयेनास्या नित्यता काम्यता चेतिसम्पन्ना इति-अत्र प्रायश्चित्तरूप बचनं स्मृत्यन्तरे-अर्के पर्वद्वयेरात्रौ चतुर्दश्यष्टमी दिवा । एकादश्यामहोरात्रं भुक्त्वा चान्द्रायणंचरेदिति उभत्रपक्षे सूतकादावपि उपवास विधिवारोह-सूतकेऽपिनरः स्नात्वा प्रणम्य मनसा हरिम्-एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते-मृतकेऽपिनभुञ्जीत एकादश्यां सदानरः इति समय मयूषे-श्राद्धदिनेऽपि-उपवासोयदानित्यः श्राद्धंनैमित्तिकंयदा । उपवासंतदाकुर्य्यादाघ्राय पितृसेवितम् । इतितत्रैव माधवः ॥ ५३ ॥

**कृष्णायामुपवासः पुत्रसुखैषीन कुर्वीत ।**

**कृष्णांशुक्लामपितांजीवत्पतिका नविदधीत ॥ ५४ ॥**

अथ व्रताधिकारीणोनिरुप्यन्ते तेनैवच्छन्दसा- कृष्णायामिति-कृष्णायाम् कृष्णपक्षोद्भवामेकादश्यां पुत्र सुखैषी पुत्रसुखाभिलाखी पुरुषः उपवासः उपोषणंनकुर्वीत्-तदुक्तंकौर्मे एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि । वनस्थ यति धर्मोऽयम् शुक्लमिव सदागृही इति भविष्येऽपि—एकादश्यां न भुंजीत पक्षयोरुभयोरपि । व्रह्मचारी चनारीच शुक्लामेव सदागृही इति नारी विधवा व्रह्मचारी साहचर्य्यात् सधवायास्तु पक्षद्वयेऽपि निषेध इति वक्ष्यत्यधुनैव-चातुर्मास्यन्तर्गतातु कृष्णापि

गृहिणोपोष्या—शयिनीबोधिनीमध्ये या कृष्णैकादशीभवेत्। सैवोपोष्यागृहस्थेन नान्या कृष्णा कदाचन इतिपाद्मात्—एत-च्चापुत्रिगृहिविषयम् पुत्रवतस्त्वत्रापि निषेधः—संक्रान्त्या मुपवासञ्च कृष्णैकादशिवासरे-चन्द्रसूर्य्य ग्रहेचैव न कुर्य्या-त्पुत्रवान् गृहीइति नारदः—अथ जीवत्पतिक स्त्रीकर्तृक विशेष-माह—कृष्णामितिजीवन् पतिर्यस्याः सा सधवास्त्री कृष्णा-कृष्ण पक्षगताम् शुक्लांशुक्ल पक्षगतांचतामेकादशी न विदधीत न कुर्य्यात् इति—तदुक्तं विष्णुनां-पत्यौजीवति यानारी उपोष्यव्रतमाचरेत्-आयुष्यंहरते भर्तुः सा नारी नरकं व्रजेत् इति मनुरपि-नास्ति स्त्रीणां पृथग् यज्ञोन व्रतं ना प्युपोषणम्-पति सुश्रूषते यातु तेन स्वर्गे महीयते इति अष्टवर्षाधिकोमर्त्यो ह्यशीतिन्यून वत्सरः। एकादश्यामुपवसे त्पक्षयो रुभयोर-पीतिकात्यायनः अष्टवर्षाधिक इत्युपनयनोत्तरत्यस्योपलक्षणम् अपिवावेदतुलयत्वाद्उपायेन प्रवर्तैरन् इत्युक्त त्वात्-इति-व्रता-करणे दोषाधिक्यमाह सनत्कुमारः-एकादश्या मुनिश्रेष्ठ यो भुंक्ते मूढचेतसः प्रति मासं स भुंक्तेतु किल्पिषंश्वादिविटसमम् निष्कृति र्मद्यपस्योक्ता धर्मशास्त्रे मनीषिभिः। एकादश्यन्नकाम-स्तु निष्कृतिःक्वापिनोदिता मद्यपानान्मुनिश्रेष्ठपातैवनरकं व्रजेत्। एकादश्यन्नस्तुपितृभिः सहमज्जति इतिविस्तरस्तु कालमाधवादिषुद्रष्टव्यः इति ॥५४॥

सूर्य्योदयात्पूर्व मुदाहरन्ति
मुहूर्तयुग्मंत्वरुणोदयाख्यम्।
तत्रापिवेधोदशमीकृतश्चेन्न
वैष्णवानां हितकारिणी सा ॥५५॥

अथ उपेन्द्रवज्रयाऽरुणोदय काल लक्षणमाह-सूर्य्योदया दितिसूर्य्योदयात् पूर्वम् प्रथमम् मुहूर्तयुग्मम् मुहूर्तद्वयम अरुणोदयाख्यम् अरुणोदयनामकम् तादृशं वेधमुदाहरन्ति-कथयन्तिमुहूर्तलक्षणमुक्तममरे—अष्टादश निमेषास्तु काष्ठास्त्रिशत्तुताःकलाः। तास्तुत्रिंशत्क्षणास्तेतु मुहूर्तो द्वादशस्त्रियाम् अरुणोदय लक्षणमुक्तम् हेमाद्रौ—निशिप्रान्तेतुयामार्द्धे देव वादित्य वादने। सारस्वता नध्ययने चारुणोदय उच्यते-कालिदासोऽपि ज्योतिर्विदाभरणे-घटीचतुष्कोन मितः क्षणः क्वचितप्रातस्ससैकस्त्वरुणोदयस्मृतः। सैकस्तथोषा समयो घटीद्वयं शेषंखरांशूदय एव कर्मणीति। इत्यादि मताना मानन्त्यात्समयनिर्णयोदुर्लभः, तस्माच्चतुर्घटिकात्मक एवारुणोदय काल इतिसिद्धम तेनषटपञ्चाशद्दण्डानन्तरं दशमी प्रवेशे अरुणोदयवेध उक्तो भवति-इतिभट्टकमलाकराशय इति-अथ निर्णीतस्यारुणोदयकालस्य प्रयोजनमाह-तत्रापीति-तत्रापि अरुणोदयकालेऽपि चेद्यदि दशमीकृतोवेधस्तदा वैष्णवानांविष्णु परायणानां हितकारिणी यथोक्त फल दात्री सा एकादशीनेति-अरुणोदयवेलायाम् दशमी विद्धा, एकादशी वैष्णवैस्त्याज्येति भावः तदुक्तं गारुणे-दशमीवेधसंयुक्तो यदिस्या दरुणोदयः-नैवोपोष्यं वैष्णवेना तद्दिनैकादशी व्रतम-इति-विद्धैकादशी व्रत करणे स्पष्ट दोषमुक्तम् कृत्यसार समुच्चये-एकादशी दशमी विद्धागान्धार्यासमुपोषिता-तस्याः पुत्रशतंनष्टंतस्मात्ताम्परि वर्जयेदिति-अत्र पञ्च पञ्च उषः कालः षटपञ्चारुणोदयः। सप्त पंच भवेत्प्रातस्ततः सूर्योदयस्मृतः। इत्युक्त्या युगभेदेन वेधभेदः, द्वैतनिर्णये-प्रातर्वेधः कृतयुगे त्रेताया मरुणोदये। द्वापरे चाप्युषः काले कलौ सूर्य्योदये स्मृत इति—अथ प्रसंगाद्वेधान्तरमपि प्रदर्श्य प्रत्याख्यातम् माधवे-नन्व-

रुणोदयात्पूर्वमर्द्ध रात्रात्परतोपि दशमी कला विद्यते तदा नोप-वासः कर्त्तव्यः तदभावेतूपवासः कर्त्तयः तथा च स्मृतिः अर्द्ध रात्र परायत्र एकादस्युपलभ्यते-तत्रोपवासः कर्त्तव्यो नतुवैदशमीकलेति-मैवम्-अर्द्ध रात्रे वेधोऽपियदा त्याज्यस्तदा-किमुवक्तव्यमरुणोदयवेध इतिवक्तु मर्द्ध रात्रवेधउपन्यस्तो नतुवेधाभिप्रायेण तदेव ब्रह्मवैवर्ते शौनकेन स्पष्टी कृतम् । अर्द्ध रात्रे तुकेषाञ्चिद्दशम्यांवेधइष्यते । अरुणोदय बेलांया नावकाशो विचारणे-कपाल वेध इत्याहुराचार्या ये हरि प्रिया । नतन्मममतं यस्मात्त्रियामारात्रि रिष्यते कपाल वेधोऽर्द्ध रात्रवेधः-इति ॥ ५५ ॥

सूर्य्योदयादुत्तरतस्तु यातः
स्मार्त्तैर्विहेयश्शमनस्यवेधः ।
वैखानसाद्यागमसम्प्रणीत
दीक्षायुतोयःसतुवैष्णवोऽत्र ॥ ५६ ॥

अथ दशमीवेधोद्विधा अरुणोदयवेधः सूर्योदयवेधश्च तत्रारुणोदय वेधमुक्तवा इन्द्र वज्रया सूर्योदयवेधं वैष्णवल-क्षणञ्चाह-सूर्योदयादिति-सूर्योदयात् सूर्य्योदयकालात्' उत्त-रतः परस्तात् (सार्वविभक्तिकस्तसिः) सूर्योदयादिति (अन्यारा-दित ) इति पञ्चमी-शमनस्य शमन स्वामिकया दशम्या यातः प्राप्तोवेधः स्मार्तैः स्मृति धर्मविद्भिर्विहेयस्त्याज्यः तत्रारु-णोदयवेधोवैष्णवपरः तद्वाक्ये वैष्णवग्रहणात्-परिशेषात् सूर्य्योदयवेधो वैष्णवभिन्नपरः तएवस्मार्तपदेन व्यवह्रियन्ते ग्रन्थेषु-इतिसमयमयूषः । तदुक्तं माधवे न अरुणोदय वेधोऽ-त्रवेधः सूर्योदयेतथा । उक्तौद्वौ दशमीवेधौ वैष्णवस्मार्तयोः

क्रमात् । सूर्य्योदयलक्षणम् ज्योतिर्विदाभरणे घटीद्वयं-शेषं खरांशूदय एवकर्मणि शेषंघटीद्वयं खरांशूदयः सूर्य्योद-यएव स्मृतः क्व कर्मणि-एतेन सूर्य्योदयात् प्राक् घटीद्वयस्य सूर्योदय संज्ञेति बुद्ध्यत इति अतएव ततः सूर्योदयः स्मृतः इत्युक्तम्प्राक् इति अथ पूर्वश्लोके वैष्णवशब्द उक्तः तस्यलक्षणमाहवैखानसे वैखानसाद्यात्रृषयः तैरागमेस्व शास्त्रे प्रणीता निरूपिता या दीक्षा मंत्र विशेषः तयायुतोयः सोऽत्रवैष्णवः तदुक्तं माधवेन वैखानस पञ्चरात्रिवैष्णवागमोक्त दीक्षाम्प्राप्तो वैष्णव इति गारूडेऽपि वैखानसाद्यागमोक्त-दीक्षां प्राप्तोहिवैष्णव इति स्कान्देऽपि परमापदमापन्नो हर्षे वा समुपस्थिते । नैकादशींत्यजेद्यस्तु यस्यदीक्षास्तिवैष्णवी समात्मा सर्वजीवेषु निजाचाराद्‌विप्लुतः । विष्णवर्पि ताखिलाचारः सहिवैष्णवउच्यते विष्णुपुराणेऽपि नचलति निजवर्ण धर्मतोयः सममतिरात्म सुहृद्विपक्षपक्षे । नहरतिनच हन्तिकञ्चिदुक्तैः सितमनसं समवेहि विष्णुभक्तम् इति अयम्भावः । वैष्णवशब्दः ब्राह्मणशब्दवत् न जातिवा चकः तत्पुत्रादौ तत्सहोदरादौच वैष्णवत्वाभावात् किन्तु योग शब्दः तथा चायमर्थो भवति विष्णोरियंवैष्णवीदीक्षा नाम वेत्तिगुरुद्वारा इति वैष्णवः वस्तुतस्तु विष्णु मंत्र ग्राहके त्यागिनि रूढः । स्मार्तशद्वच स्मृति वोधित धर्मवति वर्तते तदुक्तं माधवेन श्रोतस्मार्त पर्यवसिताः पञ्चरात्रादिदी-क्षारहिताः स्मार्ताः ॥ ५६ ॥

**विद्धा न कार्य्यखलु वैष्णवेन**

**श्रद्धा विहेया यदि साधिकास्यात् ।**

एकादशी द्वादशिका द्वयद्धौ

पूर्वां विहायोत्तरतोबिदध्यात् ॥५७॥

अथेन्द्र वज्रयावैष्णवविषय विशेष निर्णयमाह विद्धेति वैष्णवेन उक्तलक्षण सम्पन्नेन खलुनिश्चयेन विद्धादशमी दूषिता एकादशी नकार्य्या नोपोष्या, इत्यर्थः । तदुक्तंस्मृत्यन्त-रे-कलार्द्धे नापिविद्धास्याद्दशम्येकादशी यदि । तदाप्येकादशीं हित्वा द्वादशीं समुपोषयेत् । इति अयंवेधहतूभयत्र, अर्थात्कला काष्ठादिवेधोऽरुणोदये सूर्य्योदये च समान इतिमाधवः । तत्रा-रुणोदय वेधोवैष्णव विषयः । तदुक्तं गारुडे दशमी शेषसंयुक्तो यदिस्यादरुणोदयः । नैवोपोष्यंवैष्णवेन तद्दिनैकादशी व्रतम् इति—अथाधिक्यंत्रिविधम् एकादश्याधिक्यम् द्वादश्याधिक्यम् उभयाधिक्यंचेति एषुपक्षेष्वरुणोदय मारभ्य प्रवृत्तां शुद्धामप्ये-कादशींपरित्यज्य परेद्युरुपवासः कर्तव्यः, इति माधवमतम्-तत्रैकादश्याधिक्यंदूषयति-शुद्धेति-यदिशुद्धा अरुणोदयमारभ्य प्रवृत्ता सा एकादशी अधिका बृद्धियुक्ता स्यात्तदा विहेया त्याज्या वैष्णवैरिति-तदाह नारदः—सम्पूर्णैकादशीयत्रद्वादशी वृद्धिगामिनी । द्वादश्यांलंघनंकार्य्यं त्रयोदश्यान्तुपारणामिति स्मृत्यन्तरेपि, एकादशी यदा पूर्णा परतः पुनरेवसा । पुण्यंक्र-तुशतस्योक्तंत्रयोदश्यांतुपारणम्, इति द्वादश्याधिक्ये व्यास आह एकादशीयदालुप्ता परतोद्वादशी भवेत् उपोष्याद्वादशीतत्र यदीच्छेत्परमांगतिम् इति अथ एकादशी द्वादशिकाद्वयद्धौ तिथिद्वयस्यवृद्धौ सत्याम् पूर्वांविहाय उत्तरत उत्तरां स्वीकृत्य व्रतं विदध्यात् तदाहभृगुः सम्पूर्णैकादशी यत्र प्रभातेपुनरेवसा । तत्रोपोष्याद्वितीया तु परतोद्वादशीयदि इति ॥ ५७ ॥

तिथिद्वयवृद्धौ परतो विधेया
स्मार्तैर्यदैकादशिकैव वृद्धा ।
तदा गृही पूर्वदिने प्रकुर्य्यात्
यतिस्तु तामुत्तर एव घस्रे ॥ ५८ ॥

अथ तिथिद्वयवृद्धौ व्रतं कदा कार्य्यं तदेवोपजात्याह तिथीति तिथिद्वयवृद्धौ, एकादशी द्वादश्योर्वृद्धौ सत्यां स्मार्तैः पञ्चरात्रादिदीक्षा रहितैः परतः परत्रैकादशी विधेया उत्तरैकादश्यां व्रतं कार्य्यमित्यर्थः तदुक्तं माधवेन । एकादशी द्वादशी चेदुभयं वर्द्धते यदा । तदा पूर्वदिनं त्याज्यं स्मार्तैर्ग्राह्यं परं दिनमिति । पुनस्तत्रैव गरुड़पुराणे । सम्पूर्णैकादशी यत्र प्रभाते पुनरेव सा तत्रोपोष्या परा पुण्या परतो द्वादशी यदीति । केवलैकादश्याधिक्ये सति निर्णयमाह यदेति यदा यस्मिन् काले एकादशिका एकादशी एव एकादशिका एकादशी तिथिः वृद्धा वृद्धा तदा गृही गृहस्थः पूर्वदिने प्रथमेऽह्नि एव व्रतं कुर्य्यात् यतिस्तु तामेकादशीमुत्तरे एव घस्रे दिने व्रतं कुर्य्यात्, इति । तदाह माधवः एकादश्याधिक्यपक्षे गृहियत्योर्व्यवस्था अभिहिता स्कन्दपुराणे । प्रथमेऽहनि सम्पूर्ण व्याप्याहोरात्र संयुता । द्वादश्यां च तथा तात दृश्यते पुनरेव सा पूर्वा कार्य्या गृहस्थैस्तु यतिभिश्चोत्तरा विभो इति । एवमेकादश्याधिक्ये द्वितीयाधिक्येऽपि निर्णयो दर्शितः । अनुभयाधिक्ये तु नास्ति सन्देह इति ॥ ५८ ॥

स्याद् द्वादशीमात्र समृद्धिसत्वे
विद्धोत्तरा पूर्वत एव शुद्धा ।

वेधस्तु यः पूर्वमुदाहृतस्तं
व्रतेऽवगच्छेदुपवासभिन्ने ॥ ५८ ॥

अथोपजात्या द्वादश्याएवबृद्धिसत्वे पूर्वाविद्धा उत्तरावा, इत्यतआह—स्यादिति-द्वादश्या एवबृद्धि सत्वे उत्तरा। उत्तरा द्वादशीविद्धा पूर्वतः पूर्वा एव शुद्धा उपोष्या ( पूर्वत इत्यत्र पूर्वाशब्दात्-(सार्वविभक्तिकस्तसिः ) इतराभ्योऽपिदृश्यन्ते इति सर्वनाम्नोवृत्तिमामात्रे पुंवद्भावः । तदाहमाधवः। द्वादशीमात्र वृद्धौतुशुद्धा विद्धेव्यवस्थिते। श्रद्धापूर्वोत्तराविद्धास्मार्तनिर्णय ईदृशः-द्वादश्याधिक्ये पूर्वे द्युरुपवासमाह नारदः। न चेदेकादशी विष्णौद्वादशीं परतःस्थिताउपोष्यैकादशोतत्रयदीच्छेत्परमंपद-मितिवेधस्त्वत्रग्रन्थे ( सूर्य्योदयानन्तरमस्ततःप्राक् ) इत्यादिना निर्णीति एव तमेव उपबास भिन्नेव्रतेव्रत विषये अवगच्छेत् जानीयात्-उपवासेतु वेधं विचारयेदित्यर्थः अयम्भावः एकादश्युपवासोद्विधा निषेधपरिपालनात्मको व्रतरूपश्च-तत्राद्यो यथा नशंखेनपिवेत्तोयंनखादेत्कूर्मसूकरौ। एकादश्यांनभुञ्जीत पक्षयोरुभयोरपीति। कौर्म्मः-अग्निपुराणेऽपि-गृहस्थोब्रह्मचारी च आहिताग्निस्तथैवच। प्राप्तेहरिदिने सम्यग्विधायनियमं-निशि। दशम्यामुपबासस्य प्रकुर्य्याद्वैष्णवंव्रतम्—वेधादि विचारस्तु व्रतेएव नतुनिषेधपरिपालने-कलाकाष्ठादिगत्यैव दृश्यतेदशमीविभो। एकादश्यांनकर्तब्यं व्रतंराजन् कदाचनेति। इति स्कान्द बचनात्-अत्रश्रद्धाविद्धयोरुभयोरप्येष निर्णयः—एकादशी द्वादश्यो रुभयोरपिवृद्धौ परेद्युरुपवासः। द्वयोरव्यवृद्धौ पूर्वे द्युः। एकादशीमात्रवृद्धौ गृहियत्योर्व्यवस्था। द्वादशीमात्र वृद्धौ श्रद्धायांसवेषां पूर्वे द्युविद्धायां परेद्युरितिमाधवः। अथ प्रासंगिकमन्यदपिनिरूप्यते एकादश्यांदिनक्षये उपवासंकरो-

तियः । तस्यपुत्रा विनश्यन्ति मघायांपिण्डदोयथा । दिनक्ष यस्तु पाद्मे द्वौतिथ्यन्तावेकवारे यस्मिन् सस्याद्दिनक्षयः । दिनक्षये च उपवासस्य निषेधः स च निराहारस्यैव तथा च वायवीये-उपवास निषेधेतु भक्ष्यं किञ्चित्प्रकल्पयेत् । न दूषय त्युपवासेन उपवास फलंलभेदिति—एवं कृष्णैकादश्यादावपि गृहस्थस्य तत्रै व नक्तं हविष्यान्न मनोदनं वा फलंतिलाः क्षीर मथाबु वाज्यम् । यत्पञ्चगव्यं यदिवापिवायुः प्रशस्तमत्रोत्तर मुत्तरञ्च ॥ इति—ज्येष्ठ शुक्लैकादशी निर्जला तदुक्तंस्कन्द-पुराणे-ज्येष्ठे मासिनृपश्रेष्ठयाशुक्लैकादशी भवेत् । निर्जलं समुपोष्यात्र जलकुम्भान् सशर्करान् । प्रदाय विप्रमुख्येभ्यो मोदतेसन्निधोहरेरिति-अथदशमीविद्धाभ्यनुज्ञापकानिकानिच्चिद्वा क्यान्युपलभ्यन्ते-तद्यथा स्कन्दपुराणे । त्रयोदश्यांन लभ्येत द्वादशी यदि किञ्चित् । उपोष्यैकादशीतत्र दशमी मिश्रिताऽपि चेति स्मृत्यन्तरेऽपि-उपोष्यैकादशीतत्र द्वादशी न भवेद्यदि । दशम्याहि विमिश्रैव एकादश्येव धर्मकृदिति । वृहद्वसिष्ठः द्वादशी स्वल्पमल्पापि यदिनस्यात्परेऽहनि । दशमी मिश्रिता कार्य्या महापातक नाशिनीति । ऋष्यश्रृङ्गः । एकादशी नलभ्येत द्वादशी सकलाभवेत् । उपोष्यैकादशी विद्धा ऋषिरुद्दालकोऽ-ब्रवीदिति—हारीतोऽपि त्रयोदश्यां यदानष्टा द्वादशी घटिका-द्वयम् । दशम्येकादशी विद्धा सैवोपोष्या सदातिथिः । एतादृ-शानि वाक्यानि सर्वष्यनुभयाधिक्ये सर्व विषयाणि एकादश्या धिक्येतु स्मार्तगृहस्थ विषयाणि द्रष्टव्यानि नतु वैष्णवविषया-णि-वैष्णवप्रकरणेषु विद्धाभ्यनुज्ञाया अदर्शनात एकादशीभवे-त्पूर्णा परतोद्वादशीयदितदाह्येकादशींत्यक्त्वा द्वादशीं समुपोषये दिति स्कान्दे-कालिकापुराणेऽपि एकादशी यदापूर्णा परतोद्वा-दशीय दिउपोष्या द्वादशीतत्र तिथिवृद्धिः प्रशस्यते इति । एतादृ-

शानि वाक्यानिवैष्णव विषयाणि—एतेच पक्षाः काल माधवे प्रपञ्चिताः इति अन्यदपि एकादशो द्वादशो च रात्रिशेषे त्रयोदशी। त्रिःस्पृशानाम सा प्रोक्ता ब्रह्महत्यां व्यपोहति। तदेत द्वैष्णवविषयं यति विषयं वा द्रष्टव्यम् गृहस्थैस्तु तन्निषिद्धम्। तथा च कौर्मे-एकादशी द्वादशी च रात्रिशेषेत्रयोदशी। उपवासंनकुर्वीत पुत्रपौत्रसमन्वितः इति। पद्मपुराणेऽपि एकादशी द्वादशी च रात्रिशेषे त्रयोदशी। त्र्यहस्पृग्यदहोरात्रं नोपोष्यं तत्सुतार्थिभिः—व्रतेविशेषःस्मृत्यन्तरे। दशम्यादि महीपाल त्रिदिनं परिवर्जयेत्। गन्धताम्बूलपुष्पादि स्त्रीसंभोगं महायशाः स्त्रीसम्भोग निषेधस्तु ऋतुकालादन्यत्रैवेति आह्निकान्त उक्तः-व्रते दशमी नियमः स्कान्दे-कांस्यंमांस्यं मसूरंच क्षौद्रञ्चानृत भाषणम् पुनर्भोजनमायासं दशम्यां परिवर्जयेत्। कौर्मे-कांस्यमांसंमसूरञ्च चणकान्कोर दूषकान् शाकंमधुपरान्नञ्च त्यजेदुपवसन्स्त्रियम्। मात्स्ये कांस्यं मांसं सुराक्षौद्रंतैलंवितथ भाषणम् व्यायामं च प्रवासंच दिवा स्वापञ्च मैथुनम् तिलपिष्टंमसूरं च दशम्यादिषु वर्जयेत्-दशमीं प्रकृत्य नारदीये अक्षारं लवणाः सर्वे हविष्यान्न निषेविणः। अवनी तल्पशयनाः प्रियासंगविवर्जिताः हविष्याणि भविष्योत्तरे हैमन्तिकं स्विताखिन्नं धान्यं मुद्राःप्रियङ्गवः कलायकंगुनीवार वास्तुकं हिलमोचिका कन्दः सैन्धवसामुद्रलवणे दधिसर्पिषी-पयोऽनुधृतसारंच पनसाम्र हरीतकी। पिप्पली जीरकञ्चैव नागरङ्गाह्वतित्तिणी-कदली लवलीधात्री फलान्युगुडमक्षवम्। अतैल पक्वं मुनयो हविष्याणिप्रचक्षते-यद्वयेकादश्यां श्राद्धतु मतोस्त्रियोस्संयोगस्तदाकिंकार्य्यं तदाह-स्मृतौएकादशीं दिनेयत्र भार्याऋतु मतीभवेत्। पितृ श्राद्धंच तत्रैव उपायस्तत्र कथ्यते-एकादशीव्रतंकुर्यात् पिण्डा

घ्राणंचश्राद्धकृत् अर्द्धरात्रे व्यतीतेतु ऋतुन्दद्यान्न दोषभाक्-इति कृत्यसार समुच्चयः। व्रतदिने सामान्यनिषेधः। असकृज्जल पानाच्चसकृत्ताम्बूल भक्षणात्। उपवासः प्रणश्येत दिवास्वापाच्च मैथुनात्। इत्यलम् इत्येकादशी निर्णयः समाप्तः॥ ५९॥

**द्वादशीतु सदा कार्य्या पूर्वविद्धैव पण्डितैः।**
**नैकादशी व्रतोच्छेदो द्वयोर्विष्णुर्हिदेवता ॥६०॥**

अथैकादशी निर्णयानन्तरं द्वादशी निर्णीयते सा च पूर्वाः रुद्रेणद्वादशीयुक्ता " इति युग्मवचनात् " तदेवानुष्टुभाह द्वादशीति पण्डितैः सुधीभिः पूर्वविद्धा पूर्वेण विद्धाएकादशी युतैव द्वादशी सदासर्वदा कार्य्याविधेया तदुक्तं स्कान्दे द्वादशी च प्रकर्तव्या एकादश्या युताप्रभो इति। नन्वेकं व्रतमसमाप्य व्रतान्तरमनुष्ठातुमशक्यम् असमाप्ते व्रते पूर्वे नैव कुर्य्याद्व्रतान्तरम् इति शास्त्रात्। मैवम् इदंहि शास्त्रमेकव्रतस्य मध्ये व्रतान्तरोपक्रमं निषेधति प्रकृतेतु व्रतद्वयस्यापि सहैवोपक्रमः इति तंत्रेणानुष्ठानं भवतिनतु पारण मन्तरेण प्रथोपवासस्या समाप्तत्वातत्वात् द्वितीयोपवासस्य प्रारम्भो न सम्भवति इति चेन्मैवम् अद्भिः पारणंकृत्वा द्वितीयोपवासस्य प्रारम्भात् परञ्च प्रकृते हि एकादशी द्वादश्योर्दैवतैक्यादुदक पारणमन्तरेणापिन कश्चिद्दोषः अतएव स्मर्य्यते एकादशीमुपोष्यैव द्वादशीं समुपोषयेत् न तत्र विधिलोपः स्यादुभयोर्दैवतं हरिरिति। तदेव सर्व मभिप्रेत्याह नैकादशीति एवमाचरितेऽपि एकादशीव्रतोच्छेदः एकादशी व्रतहानिर्नयतो द्वयोस्तिथ्योर्विष्णुर्देवता स्वामी इति सामान्यद्वादशीनिर्णीता विशेष स्त्वस्यां प्रतिपाद्यते। मासि भाद्रपदे कृष्णा द्वादशी श्रवणान्विता। सर्वकाम प्रदापुण्या

उपवासे महाफलेति । संगमे सरितां स्नात्वा द्वादशींसमुपोषितः समग्रं समवाप्नोति द्वादशे द्वादशीफलम् । अत्रवरुणासंगमेस्नान मुक्तम् लैङ्गे अतः परन्तु संसेव्यम् गंगावरुण संगमम् । श्रवणे द्वादशीयोगे बुधवारोयदाभवेत् । तदातस्मिन्नरः स्नात्वा सन्निहत्यफलं लभेत् इति समय मयूषः, इति । द्वादश्यां किं त्याज्यम् तदाहबृहस्पतिः दिवानिद्रां परान्नं च पुनर्भोजन मैथुने क्षौद्रं कांस्यामिषेतैलं द्वादश्यामष्टवर्जयेत् इति । अथ प्रसंगादामिष विचारः पाद्मे प्राण्यंकुचूर्ण चर्माम्बुजंम्बीरंवीजपूरकम् अयज्ञशिष्टं माषादियद्विष्णोरनिवेदितम् । दग्धमन्नं मसूरश्चमांसंचेत्यष्टधाऽऽमिषम् गोछागी महिषी दुग्धादन्य दुग्धंतु चामिषम् इतिकृत्यसार समुच्चये । एकादशी पारण विषयेमाधवीये कलाद्वयं त्रयंवापि द्वादशींनत्वतिक्रमेत् पारणे मरणेनृणां तिथिस्तात्कालिकी स्मृता इति । अल्पायां द्वादश्यांविशेषः स्कान्दे । यदाभवेदतीवाल्पा द्वादशी पारणादिने । उषःकालेद्वयं कुर्य्यात्प्रातर्माध्याह्निकंचतत् ॥ ६० ॥ इति द्वा०

निर्णीता द्वादशीत्थं
मदर्नातथिरयो पूर्व विद्धा प्रशस्ता
शुक्ला कृष्णोत्तराशौ
यदि न परदिने लभ्यते तर्हिपूर्वा ।
शुक्लापूर्वा पराह्णे
यदि भवति तदैवोत्तरै वान्ययाथो
पूर्वैवोक्ता बुधैस्सा
सहसि सितदले यत्वनंगादि नाम्नी ॥ ६१ ॥

अथ त्रयोदशी शुक्ला पूर्वा कृष्णोत्तरा ग्राह्या तदेव स्रग्धरा वृत्तेन निर्णीयते निर्णीतेति द्वादशी तिथि रित्थममुना प्रकारेण निर्णीता निश्चिता अथो अनन्तरम् मदनतिथिः त्रयोदशी शुक्ला शुक्ल पक्षोत्पन्ना पूर्वविद्धा द्वादशी युक्ता प्रशस्ता शुभा तदुक्तं ब्रह्मवैवर्ते त्रयोदशी प्रकर्तव्या द्वादशी सहितामुने। भूतविद्धान कर्तव्यादर्शः पूर्णाकदाचन इति। यद्यप्यत्र शुक्ल पक्ष शब्दोनास्ति तथापि कृष्ण त्रयोदश्याः परविद्धाया वाचनिकत्वात् अतः शुक्ल पक्ष लाभोमाधवोऽप्याह शुक्लात्रयोदशी पूर्वा पराकृष्णा त्रयोदशो इति। कृष्णाकृष्ण पक्षोद्भवा मदनतिथिः उत्तरान्विता प्रशस्ता चतुर्दशीयुक्तेति यावत् तदुक्तं निगमे षष्ठ्यष्टमी अमावास्या कृष्ण पक्षे त्रयोदशी। एताः परयुताः पूज्याः पराः पूर्वयुतास्तथेति। यदात्वसौ मदनतिथिः कृष्णा परविद्धानोपलभ्यते तदा पूर्वविद्धापिग्राह्या तदाह वसिष्ठः—एकादशी तृतीया च षष्ठी चैव त्रयोदशी। पूर्वविद्धापि कर्तव्या यदि न स्यात्परेऽहनि। शुक्ला शुक्ल पक्षोत्पन्ना त्रयोदशी पूर्वयुक्ता यदि अपराह्णे भवति तदैव ग्राह्या तदुक्तं स्कान्दे त्रयोदशी प्रकर्तव्या या भवेदापराह्णिकी इति। अन्यथाऽपराह्ण व्याप्त्यभावे उत्तरा चतुर्दशी युक्तेतितत्वम् अथ सहसि मार्गशीर्षे (मार्गशीर्षे सहामार्ग आग्रहायणिकश्चसः) इत्यमरः सितदले शुक्लपक्षे यत्तु या अनङ्गाद्दिनाम्नी अनङ्गः, आदिनाम्नि यस्याः सा अनङ्ग नामन् शब्दात् (अन उपधालोपिनोऽन्यतरस्याम्) इति ङीप् पूर्वैव द्वादशी सहितैव अत्रायं विवेकः। मार्ग शुक्ल त्रयोदशी अनङ्ग त्रयोदशी सापूर्व युतैवग्राह्या नतूत्तरेति तथा च भविष्ये मार्गशीर्षेऽमले पक्षे-इत्युपक्रम्यव्रतं विधाय अनङ्गेन कृताह्येषा-तेनानङ्ग त्रयोदशी। इत्युपसंहारा दिति माधवः॥ ६६॥

प्रदोषगायामथ शम्वरारेः

तिथौ प्रदोषव्रतमुक्तमत्र ।

नक्तव्रतं शङ्कर पूजनञ्च

कार्य्यं प्रदोषेतनयादिकामैः ॥ ६२ ॥

अथ प्रदोषगायां त्रयोदश्यां प्रदोष व्रतमुक्तं तद्देवोपजात्याह प्रदोषेति अथ प्रदोषगायाम् रजनि मुखगतायाम् अत्राख्यां शम्वरारेः कामस्य तिथौ त्रयोदश्याम् प्रदोषव्रतमुक्तम् आचार्यै रितिशेषः प्रदोषोरजनी मुखम् इत्यमरः प्रदोषे सायं काले तनयादि कामैः पुत्रधनादिमनोरथवद्भिः पुरुषैः नक्तव्रतम् दिनानशन पूर्वरात्रि भोजनम् शङ्कर पूजनं शिवार्चनञ्च कार्यमित्यर्थः । प्रदोषव्रत मुक्तं ब्रह्मोत्तर खण्डे पक्षद्वये त्रयोदश्यां निराहारो भवेद्दिवा । घटीत्रयादस्तमयात्पूर्वस्नानं समाचरेत् । शुक्लाम्बर धरोभूत्वा वाग्यतो नियमान्वितः । कृतसन्ध्याजपविधिः शिवपूजां समारभेत् इति । इतिव्रतमभिधाय एवमाराधयेद्देवं प्रदोषेगिरिजा पतिम् व्राह्मणान्भोजयेत्पश्चात् दक्षिणाभिश्चपोषयेदिति । दिनेऽनाहार कर्तृकं शिवपूजा प्रधानकं व्रतंस्मर्य्यते । तत्र प्रदोषव्यापिनी ग्राह्या तत्रैव पूजा विधानादिति ॥ ६२ ॥

प्रदोषगाचेद्दिनयोर्द्वयोस्स्या-

न्नवातदानींतितिथिरुत्तरैव ।

पूर्वामयूखेऽभिहिताप्युपेक्ष्या

धीरेण जावालिवचोविरोधात् ॥ ६३ ॥

अथ दिनद्वये प्रदोषगा चेन्नवापि तदा कदाव्रतंकार्य मित्युपजातयाह प्रदोषगेति चेद्यदि द्वयोर्दिनयोः प्रदोषगा निशामुखमधिगता त्रयोदशी नवा द्वयोरह्नोः प्रदोष व्यापयभावस्तदानीमपि उत्तरैवपरैव ग्राह्या, इतिशेषः मयूखे दिनद्वये प्रदोष व्यापित्वेऽव्यापित्वे वा पूर्वैव तथाच सुमन्तुः त्रयोदशी तुकर्तव्या द्वादशी सहिता मुने इति वचनेन पूर्वा द्वादशी युता ग्राह्या इति अभिहिता कथिताऽपि धीरेण पण्डितेन जावालि वचोविरोधात्, उपेक्ष्या त्याज्या इत्यर्थः तथाच जावालिः उभयोर्यदिवातिथ्योः प्रदोषव्यापिनीतिथिः । तत्रोत्तरत्रनक्तंस्यादुभयत्रापिसायतः दिनद्वये प्रदोषव्याप्तौ तदव्याप्तौ साम्येनतदैकदेशास्पर्शे उत्तरा सङ्कल्प काले सत्वात्, इति तत्वम् इदञ्च कृष्णपक्षे मन्दवारे प्रशस्तम् मन्दवारे प्रदोषोऽयं दुर्लभः सर्वदेहिनाम् तत्रापि दुर्लभस्तस्मिन् कृष्णपक्षे समासतः इति तत्रैवोक्तत्वात् तिथिकृत्ये च कृष्णादि व्रतेशुक्लादिरेवच इति समयमयूखे कार्तिक कृष्ण त्रयोदश्यां दीपदानमुक्तं चन्द्रप्रकाशे कार्तिकस्या सिते पक्षे त्रयोदश्यांनिशामुखे यमदीपं वहिर्दद्यादपमृत्युर्विनश्यति ग्रामाद्बहिः गृहाद्बहिर्वेति विकल्पः इति त्रयोदशी ॥ ६३ ॥

भणन्ति पूर्वामसितां चतुर्दशीं
परां प्रशस्तांतुसितामनीषिणः ।
भवेन्मुहूर्तद्वयसत्तयातिथे
रनन्तदेवस्यपरेऽहनि व्रतम् ॥ ६४ ॥

अथ वंशस्थवृत्तेन व्यवस्थयोभयपक्षगां चतुर्दशीं निर्णेतुमारभतेभणन्तीति मनीषिणो बुद्धिमन्तः असितां कृष्ण

पक्षगतां चतुर्दशीं शम्भु तिथिं पूर्वां पूर्वयुक्तां प्रशस्तां शुभां भणन्ति कथयन्तीत्यर्थः सितां शुक्लपक्षोत्पन्नाञ्च चतुर्दशीं परां परसंयुताञ्च प्रशस्तांभणन्ति इति तथा च नारदः तृतीयैका-दशी षष्ठी शुक्लपक्षे चतुर्दशी पूर्वविद्धानकर्तव्या कर्तव्या परसंयु-तेति इति पूर्वविद्धा प्रतिषेधवाक्यम्। कृष्णपक्षेऽष्टमी चैव कृष्णपक्षे चतुर्दशी। पूर्वविद्धातुकर्तव्या पर विद्धानकर्हिचित्। इति परवेधप्रतिषेधः इत्यापस्तम्बः अथ भाद्रशुक्ल चतुर्दश्या मनन्त व्रतमभिहितम् तत्राह भवेदिति अनन्तदेवस्यतिथेः चतुर्दश्याः मुहूर्तद्धय सत्तयादण्डचतुष्टय विद्यमानतया व्रतम्भवे दिति अयंभावः अनन्त चतुर्दश्याः प्रातः काले मुहूर्तद्धय मात्रा-वशेषोद्धश्यते तदैवानन्त व्रतंकार्यम् नतुपूर्वस्मिन् यद्यप्यत्र भाद्रपद शुक्लोल्लेखनंनद्धश्यते तथापिग्रन्थान्तरातद्रष्टव्यम् तथाच ज्योतिर्विदा भरणे मध्याह्न कालान्तगता चतुर्दशी सिताहिसा-भाद्रपदेनृयोषिताम् बुधैरनन्तव्रतमादृतं सदा तथा कलौनापि-ततः फलाप्तये उक्तश्च उदये त्रिमुहूर्ताऽपि ग्राह्यानन्त व्रतेतिथिः भविष्येऽपि तथा भाद्रपदस्यान्ते चतुर्दश्यांद्विजोत्तम। पौर्णमा-स्यां सतायोगे व्रतञ्चानन्तकंचरेत् इति गोविन्दार्णवे, इति स्कान्देप्युक्तम् मुहूर्तमपिचेद्भाद्रे पूर्णिमायां चतुर्दशी सम्पूर्णां तां विदुस्तस्यां पूजयेद्विष्णुमव्ययम् ॥ ६४ ॥

सिताऽपिसाश्रावणिके चचैत्रिके
निशायुता शस्ततरोदिताबुधैः।
अथापराह्णे यदिलभ्यते सिता
तदातु पूर्वाद्रियते विचक्षणैः ॥ ६५ ॥

अथ वंशस्थ वृत्तेन श्रावणे चैत्रेच चतुर्दश्यां विशेषमाह सितापीति बुधैर्विद्वद्भिः श्रावणिके श्रावणे चैत्रिके चैत्रेचमासि सितापि शुक्लपक्षोद्भवापि चतुर्दशी निशायुता रात्रियुक्ता शस्ततरा अतिशयेन शस्ता उदिता कथिता। यदि श्रावणस्य चैत्रस्यच सिता चतुर्दशी अपराह्णे दिनस्य तृतीयांशे लभ्यते प्राप्यते नतुनिशायाम् तदाविचक्षणैः धर्मशास्त्रतत्वज्ञैः पूर्वा आद्रियते त्रयोदशी युक्तेतियावत् तदुक्तंवौधायनेनमयूखे मधोः श्रावण मासस्य यातु शुक्ला चतुर्दशी सा रात्रिव्यापिनी ग्राह्या परा पूर्वाह्णगामिनी इति अत्रायं विवेकः चतुर्दशीतु कर्तव्या त्रयोदश्यायुत।विभो इति स्कान्दवचनं सामान्यभूत मुत्सर्गः तदपवाद भूतम् तृतीयैकादशी षष्ठीति नारदीयंवचनम् विशेषभूतम् तदपवादभूतोऽयम् मधोः श्रावण मासस्येति श्लोकः तन्मूलकोऽयं श्लोकः इति ॥ ६५ ॥

**या माधवीयसितपक्षगतासुधीभिः**

**साव्याहृता खलुनृसिंहचतुर्दशीताम् ।**

**कुर्य्यात्प्रदोष समयानुगतामथेयं**

**शस्तानिलर्क्षशशलांछनवारयुक्ता ॥ ६६ ॥**

अथ वसन्ततिलकया नृसिंहचतुर्दशी निर्णीयते यामाधवीयेति माधवीयसित पक्षगता वैशाख शुक्लपक्षप्राप्ता या चतुर्दशी सानृसिंह चतुर्दशी सुधीभिः पण्डितैः व्याहृताः कथिता तां चतुर्दशीं प्रदोषकाल व्याप्ताम् कुर्य्यात् तदुक्तं नृसिंह पुराणे वैशाखे शुक्ल पक्षेच चतुर्दश्यां निशामुखे मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम् गोविन्दार्णवेप्राह्ले शुक्लपक्षे चतुर्दश्यां मासि माधवसंज्ञके। प्रादुर्भूतोनृपञ्चास्यस्तस्मात्तां समुपो-

पयेत् । इति अथात्रविशेषमाह अथेति अनिलर्क्षशशलांछनवार-युक्ता स्वातीनक्षत्रेण सोमवारेणचयुक्तेयं शस्ता अतिप्रशस्ते त्यर्थः तथाचटोडरानन्दे स्कन्दः वैशाखस्य चतुर्दश्यां सोमवारे ऽनिलर्क्षके । अवतारो नृसिंहस्य प्रदोषसमये द्विजा; इति माधवे भवा माधवीया । वृद्धाच्छः ॥ ६६ ॥

तपस्यमासासित पक्षगातुया
चतुर्दशी सा शिवरात्रिरुच्यते ।
उपोष्यतत्रार्चयतो महेश्वरं
महेश्वरत्वं सुलभं निवोधत ॥ ६७ ॥

अथ वशस्थवृत्तेन शिवरात्रिर्निर्णीयते-तपस्येति तपस्य फाल्गुनस्य असितपक्षगा असितपक्षं गच्छति इति, असित पक्षगा कृष्णपक्षगा या चतुर्दशी सा शिवरात्रि रुच्यते यद्यप्यत्र शिवस्यरात्रिः शिवरात्रिरित्यवयवार्थः प्रतीयते । तथापि योगा द्र ढेर्वलवत्वात, योगोऽत्रनग्राह्य एवमयं शिवरात्रि शब्दोरुढ इति तत्र चतुर्दश्यामुपोष्य उपवासंकृत्वा महेश्वरंशिवमर्चयतः पूजयतोजनस्य महेश्वरत्वं शिवरूपत्वं सुलभम्, अनायास साध्यं निवोधत जानीत तदुक्तं स्कन्द पुराणे माघस्य कृष्ण पक्षेया तिथिश्चैवचतुर्दशी । शिवरात्रिस्तु साख्याता सर्वपाप निषूदनी । तस्यरात्रिस्समाख्याता शिवरात्रिःशिवप्रिया तस्यां सर्वे पुलिंगेषु सदासंक्रमतोहरः ममभक्तस्तुयोदेविशिवरात्रि मुपोषकः गणत्वमक्षयंदिव्य मक्षयंशिवशासनम् इति ॥ ६७ ॥

निशीथगांतां विदधीत पण्डितो
दिनद्वयेचेत्परतोऽपिवानचेत् ।

यदि त्रियामोद्धूर्वगता तिथिस्तिथेः
स्तदन्तरे पारणमन्यथात्यये ॥ ६८ ॥

अथ वंशस्थ वृत्तेनार्द्धेनव्रतमर्द्धेन तत्पारणं दर्शयितुमारभते निशोथेति पण्डितोविद्वान् ताम्पूर्वोक्ताशिवरात्रिपदवाच्यां चतुर्दशीं निशोथगामर्द्धरात्रिगतां विदधीत कुर्वीत ( निशीथंत्व-र्द्धरात्रंस्यात् ) इत्यमरः तदुक्तमीशान संहितायाम्-व्याप्या र्द्धरात्रं यस्यान्तु लभ्यते या चतुर्दशी तस्यामेवव्रतंकार्यंमत्प्रसादार्थिभिर्जनैः-इति-चेद्यदि दिनद्वये पूर्वास्मिन् परस्मिन् चार्द्धरात्र व्याप्तिसत्ता ( वा ) अथवा उभयत्र न तदापि परत्रैवव्रतविधानम् इति तदाह माधवः। निशाद्वये चतुर्दश्यां पूर्वात्याज्यापरा शुभेति। यदापूर्वेद्युनिशोथादूर्ध्वं प्रवृत्ता चतुर्दशी परेद्युः क्षयवशान्निशीथादर्वागेवसमाप्ता तदापूर्वेद्युप्रदोषनिशीथव्याप्त्योरुभयोरप्यसंभवात् —परेद्युःप्रदोष व्याप्त्र रेकस्याः सद्भावाच्च परविद्धेव ग्राह्येति-एतदेवाभिप्रेत्य स्मर्य्यते माघासिते भूतदिनं कदाचिदुपैतियोगे यदिपञ्चदश्याः । जयाप्रयुक्तां नतु जातुकुर्य्याच्छिवरात्रिंप्रियकृच्छिवस्य—इति पारणन्तु तिथि मध्येएवकार्यं तदाह यदि इति त्रयाणां यामानां समाहार स्त्रियामम्-पात्रादित्वात्, ङीबभावः त्रियामादर्ध्वंगतातिथि रितित्रियामोर्ध्वंगतातिथिःस्यात तदातिथेरन्तरम्–मध्ये पारणम् व्रतान्तभोजनंस्यात् अन्यथात्रियामोर्ध्वगतत्वाभावे अत्यये अन्ते पारणम्-तदुक्तंमाधवेन–उपोषणंचतुर्दश्यां चतुर्दश्याञ्च पारणम् ।कृतैः सुकृतलक्षैश्चलभ्यते वाथवानवा। स्कान्देऽपि-यामत्रयोर्ध्वगामिन्यां प्रातरेवहिपारणम् । इति-हेमाद्रौतु-तिथीनामेवसर्वासामुपवासव्रतादिषु-तिथ्यन्ते पारणं

कुर्य्याद्विनाशिव चतुर्दशीम्। यामत्रयादर्वाक् चतुर्दशी समाप्तौ तिथ्यन्ते पारणंज्ञेयम्, इतिसिद्धान्तः इति ॥ ६८ ॥

अकरणे वृजिन श्रवणादिदम्
भवति नित्यमुमारमण व्रतम्।
अथ कृतावपिभूरि फल श्रुतेः
समवगच्छतकाम्य मयेवुधाः ॥ ६९ ॥

अथ शिवरात्रि व्रतस्य नित्यत्वं काम्यत्वञ्चद्रुतविलम्बित छन्दसाह अकरण इति अकरणे शिवरात्रि व्रतत्यागेवृजिनश्रवणात् पापश्रुतेः इदमुमारमण व्रतम् शिवव्रतम् नित्यम् इति व्रताकरणे अनिष्टश्रुतेर्नित्य मितिभावः अथानन्तरं कृतावपिव्रत करणेऽपि भूरिफलश्रुतेः वहुफलश्रवणात्। अयेवुधाः, अय इति कोमलालापे सम्वोधनार्थमव्ययम् यूयं काम्यं काम्यत्वञ्च समवगच्छत जानीत अत्रपूर्वार्धेन व्रतस्यनित्यता-उत्तरार्द्धेन काम्यताचस्फुटीकृता तथाचोक्तंस्कान्दे-परात्परतरंनास्ति शिवरात्रिः परात्परम्। न पूजयति भक्त्येदं रुद्रंत्रिभुवनेश्वरम्। जन्तुर्जन्मसहस्रेषु भ्रमतेनात्रसंशयः-शिवञ्चपूजयित्वा योजागर्तिच चतुर्दशीम्-मातुः पयोधररसं नपिवेत्सकदाचन ममभक्तस्तुयोदेवि शिवरात्रिमुपोषकः-गणत्वमक्षयंदिव्यमक्षयं शिव शासनम्—सर्वान् भुक्त्वामहाभोगान् मृतो भूयोन जायते। इति शिवरात्रिः ॥ ६९ ॥

पंचदश्यौ परेपूर्वे सावित्री व्रत एवते।
भूतेष्टा दशनाड्यश्चेदुक्ततेतत्रादितेपरे ॥ ७० ॥

अथ नुष्टुभामापूर्णिमे निर्णीयेते पञ्चदशीति-पञ्चदश्यौ अमापूर्णिमे सावित्री व्रतेएव परेपर विद्धेपूर्वे पूर्वविद्धेच कार्ये चेद्यदि भूते चतुर्दश्याम्-अष्टादशनाड्यः तत्रापि सावित्री व्रतेऽपितेऽमा पूर्णिमे परेपर विद्धे कार्ये । उक्तञ्चमाधवेन । पूर्व विद्धैव सावित्री व्रतेपञ्चदशीतिथिः नाड्योऽष्टादशभूतस्य स्युश्चेत्तच्चाऽपरेऽहनि इति ॥ ७० ॥

ज्येष्ठेकृष्णेसितेभाद्रे सावित्रीव्रतमीरितम् ।

जिज्ञासुभिर्विधिंतस्य वीक्ष्यतां स्मृतिमल्लिका ७१

अथ सावित्री व्रतजिज्ञासायामाहानुष्टुभा-ज्येष्ठइति-ज्येष्ठे ज्येष्ठमासे कृष्णेकृष्णपक्षे भाद्रेसिते शुक्लेच सावित्री व्रत मीरितम् कथितम्—तदुक्तं स्कन्द भविष्ययोः-ज्येष्ठेमासि सितेपक्षे पौर्णिमायां तथाव्रतम् चीर्णपुरामहाभक्त्या कथितं ते मयानृप-दाक्षिणात्याश्चैतदेवाद्रियन्ते-एतदमावास्यायामप्युक्तम् निर्णयामृते भविष्ये अमायांच तथाज्येष्ठेवटमूले महासती त्रिरात्रो पोषिता नारी विधिनानेन पूजयेदिति भाद्रशुक्लराकायान्तु एतद्व्रतंनाधुनिकैस्समाद्रियते-तदाह कमलाकरः-हेमाद्रि समयो द्योतादिषुतु भाद्रपद पूर्णिमायामुक्तम्-तत्तुनेदानीं प्रचरतीतिदिक्तस्य सावित्री व्रतस्य विधिं विधानं जिज्ञासुभिः, ज्ञातुमिच्छुभिः पण्डितैःस्मृतिमल्लिकां वीक्ष्यताम् विलोक्यताम् इति पञ्चदश्यौ सान्यतो निर्णीतेति ॥ ७१ ॥

नभःसितायामपराह्णगायां

भद्रावसाने सतिपञ्चदश्याम् ।

वध्नातु रक्षां नृपतेःपुरोधाः

पुरोधसेसोऽपिवसूनिदद्यात् ॥ ७२ ॥

अथोपजात्यानभः पूर्णिमा निर्णीयते-नभःसितेति-नभःसितायाम् श्रावण शुक्लायाम् पंचदश्यां पूर्णिमायाम् भद्रावसाने भद्रान्ते सतिपुरोधाः पुरोहितः नृपतेः राज्ञो रक्षां रक्षासूत्रम्बध्नातु सोऽपि राजापि पुरोधसे पुरोहिताय वसूनि वहुधना निदद्यात् इति—तदुक्तं भविष्ये। सम्प्राप्ते श्रावणस्यान्ते पौर्णमास्यां दिनोदये स्नानं कुर्वीतमतिमान् श्रुतिस्मृति विधानतः-उपा कर्मादिकं प्रोक्तमृषीणां चैवतर्पणम्—शूद्राणां मंत्र रहितं स्नानं च शस्यते-उपाकर्माणि कर्तव्यमृषीणां चैवतु पूजनम्। ततःपराह्णसमये रक्षांपोटकिं शुभाम्। कारयेदक्षतैःशस्तैः सिद्धार्थैहेम भूषितैः-इदं भद्रायां न कर्तव्यम् तदुक्तं संग्रहे भद्रायां द्वेन कर्तव्ये श्रावणी फाल्गुनीतथा। श्रावणी नृपतिंहंति ग्राम दहति फाल्गुनीति रक्षा बन्धन मंत्रस्तु-येन वद्धोबलीराजा दानवेन्द्रो महाबलः। तेनत्वामपिवध्नामि रक्षेमाचल माचल इति—नि० सि० इदं शूद्रविषयं द्विजातिस्तु ॐ यदावध्नादाक्षायणा हिरण्य ॐ शतानीकायसुमनस्यमानाः। तन्मा आवध्नामिशतशारदा यायुष्मान् जरदष्टिर्यथा समिति-अथास्य विधिर्भविष्ये-उपलिप्तेगृहमध्ये दत्तचतुष्केन्यसेत्कुम्भम्-पीठेतत्रोपविशेद्राजाऽमात्यैश्च सुमुहूर्ते तदनु पुरोधानृपते रक्षांवध्नीतेतिमंत्रेण ॥ इति ॥ ७२ ॥

भ्रमांतिथिंकार्तिकमाससम्भवाम्

प्रदोषगामेवविधत्त पंडिताः

विधायदीपोत्षव मस्तमागते
रवौ निशीथेकुरुताम्बिकार्चनम् ॥ ७३ ॥

अथ वंशस्थवृत्तेन कार्तिकामायां दीपोत्सवंवर्णयति-अमातिथिमिति- हेपण्डिताः कार्तिकमाससम्भवाम्-अमातिथिममावास्याम्-प्रदोषगाम् निशामुखगताम्-यूयम् विधत्त कुरुत-रवौसूर्य्येऽस्तमागतेऽस्तमितेसति-तत्रदीपोत्सवंविधाय कृत्वा निशीथेऽर्द्धरात्रेऽम्बिकार्चनम् लक्ष्मीपूजनंकुरुत-तदुक्तम् हेमाद्रौ अपराह्णेप्रकर्तव्यं श्राद्धंपितृपरायणैः । प्रदोषसमयेराजन् कर्तव्या दीपमालिका—अर्द्धरात्रेभवत्येव लक्ष्मीराश्रयितुंगृहान् अतःस्वलंकृतालिप्ता दीपैर्जाग्रज्जनोत्सवाः । सुधाव्यवलिता कार्या पुष्पमालोपशोभिता इतिब्राह्मे ॥ अत्रैव पररात्रेऽलक्ष्मीनिःसारणमुक्तम् मदनरत्ने भविष्ये-एवंगते निशीथेतु जनेनिद्रार्द्धलोचने-तावन्नगरनारीभिः शूर्पडिंडिमवादनैः निष्कास्यते प्रहृष्टाभिरलक्ष्मीःस्वगृहांगणात् ॥ इति ॥ ७३ ॥

रजनिमुखगतास्यात्पूर्णिमाहोलिकायाः
दहनमपिच तस्यास्तत्त्वविद्भिरुक्तम्
प्रतिपदिशिवतिथ्यां वासरेचापिविष्ट्यां
कथमपिनदहेयुर्होलिकामिष्टकामाः ॥ ७४ ॥

अथ मालिनीवृत्तेन होलिकादहनं निर्णीयते-होलिकायाम् होलायाम्-रजनीमुखगता निशामुखप्राप्तापूर्णिमाराकास्यात् तत्रतस्यांपूर्णिमायाम् तस्याःहोलिकायाःदहनं दीपनम् विद्भिः-पण्डितैः । यद्यपिग्रन्थकर्ता कस्यांपूर्णिमायाम् होलादहन मितिननिर्णीतम् तथाप्यन्यतंत्रानु कल्पेन फाल्गुन पूर्णिमायामेव

निश्चय इति-तदुक्तंज्योतिर्विदाभरणे-हुताशनींफाल्गुन पूर्णिमास्यांनिशीथपूर्वांज्वलयेच्छुभार्थी । पश्चात्तमीनज्वलनेदिवा वानृपश्रियंहन्त्यविपत्ततिर्वा, इति । इष्टकामाःशुभेच्छवः प्रतिपदि पक्षादौ शिवतिथ्यांचतुर्दश्याम्-विष्ट्यां भद्रायांच कथमपि कश्चिदपि होलिकां होलांन दहेयुः तथाचोक्तम्-ज्योतिर्निबन्धे प्रतिपद्भूतभद्रासु यार्चिता होलिकादिवा सम्वत्सरंचतद्राष्ट्रं पुरं दहतिसाद्भुतम्—प्रदोषव्यापिनीग्राह्या पूर्णिमाफाल्गुनी सदा-तस्यांभद्रामुखंत्यक्त्वा पूजाहोलानिशामुखे ॥ इति ॥ ७४॥

पूर्वत्ररात्रिर्यदिविष्टिहीना

नलभ्यतेनापिपरप्रदोषे ।

तिथिस्तदास्यादिहविष्टिपुच्छे

दाहोऽथपुच्छंस्फुटमेवलोके ॥ ७५ ॥

अथोपजात्या दाहे विशेषमाह-पूर्वत्रेति-यदिपूर्वत्रनिशीथात् पूर्वभागे रात्रिर्निशाविष्टिहीना भद्रारहिता नलभ्यते नप्राप्यते परप्रदोषे निशान्तेऽपिनलभ्यते-तदाविष्टिपुच्छे भद्रालांगूलेदाहः कर्तव्यः अथ विष्टिपुच्छं लोकेस्फुटमेव-तदाहज्योतिर्विदाभरणे-भैःपञ्चभिर्दस्रकुभिर्नखैस्स्याद्स्याघटीभ्यःक्रमतोऽपिताभ्यः घटीत्रयंलूनलतापरञ्च सितेऽसिते चोक्तमतोऽपिभैस्याः-अस्यार्थः-विंशतिभिर्मिताभ्यो घटीभ्यः सकाशात् । अस्याभैस्याविष्टेरपरं घटीत्रयंलूनलता पुच्छंस्यात् इति-नारदोऽपि-प्रदोष व्यापिनी चेत्स्याद्यदापूर्वदिनेतदाभद्रामुखंवर्जयित्वा होलिकायाः प्रदीपनम्—निशामगे प्रपूज्येत होलिकासर्वदाबुधैः नदिवा पूजयेद ढुंढिपूजितादुःखदा भवेदिति ॥ ७५ ॥

यदिभवति परस्मिन्सार्द्धयामत्रयंवा
तदधिकमपिकालंपूर्णिमाद्याचऋद्धा।
प्रतिपदिनिषिद्दाहः स्यात्तदाहोलिकायाः
निगदितमिहशिष्टैः संशयंमात्रकार्षीः ७६

इति पण्डितवर रामदयालुशर्मविरचिते मीमांसुकण्ठाभरणे तिथिनिर्णयाख्यम् प्रथमं प्रकरणं समाप्तम्।

अथ मालिनी छन्दसा पुनस्तद्विशेषमाह-यदीति यदिपरस्मिन्दिनेसार्द्धयामत्रयम्-अर्द्धेनसहितंयामत्रयकालं भवति तदधिकं वा सार्द्धयामात्रयादधिकं वा-पूर्णिमा आद्याच-प्रतिपच्च ऋद्धावृधिंगतातदा प्रतिपदिदाहः कर्तव्यः इहशास्त्रे शिष्टैर्महात्मभिनिगदितम् अत्रैतद्विषये संशयंसंदेहमाकार्षीः—सार्द्धं यामत्रयंवास्याद्द्वितीयदिवसे यदा प्रतिपद्वर्द्धमानातुतदासाहोलिकास्मृतेति—इतिनिर्णयामृतप्रकारः—अहनिदाहनिषेधात्, निश्युक्तम् मलमास विषये उक्तंमयूषे—फाल्गुनेमलमासश्चेच्छुद्धेमासि होलिकाकार्या स्पष्टमासविशेषस्य विहितंपर्जयेन्मले, इति—होलिका विषयविचारः-केयंहोलिकेतिविषये केचिदामनन्तिसूरयः-यद्यैवयजुर्वेदे पंचमाध्यायस्थरक्षोघ्नमंत्रैस्सम्वत्सर प्रथमदिवसे सर्वएवस्वशत्रुभूतान् राक्षसान् घ्नन्ति इति। केचनेत्थंसमाधयन्ति—आसीत् सत्ययुगे पृथुनामादिराजा तत्प्रजाश्चैकदा तत्पुरस्ताद्धाहाकारपरा राज्ञापृष्टावदन्तिस्ममहाराजढुंढानाम्नी काचनराक्षसीवालानाक्रमति इति परिज्ञायपृष्टोवसिष्ठस्तेन मलिनरक्षसः पुत्रोघोरेण तपसाशिवं प्रसाद्यवरमगात्। यत्नृसुरासुरेषुकश्चिन्मांहन्तु नशक्येदिति

तथेत्युक्त्वाभवो बालकेभ्यो भयंप्रायच्छत् अथबालकेभ्यो भयंमत्वाऽनिविष्यन्विष्यवालान्घातयन्तीतिष्ठति यदि फाल्गुन शुक्लराकायां महामहोत्सवोविधेयस्तदातत्रभवता सर्वेभ्योऽभय दानंदेयम् सर्वेऽपिबालकाः गालीप्रदानं कुर्वन्तो मनस्विनः काष्ठकरीषादिभिः सायमग्निप्रज्वलेयुः तस्याः पूजनं प्रदक्षिणाञ्च कुर्युः तेनसा लज्जिताराक्षसी स्वयमेव पलायिष्यते-पूजनीया पिसा-यथा असृक्पा भयसंत्रस्तैः कृतात्वं होलिबालिशैः अतस्त्वांपूजयिष्यामिभूतिशक्ति प्रदायिनीम्—पुराण समुच्चये धूलिधारणमपि- प्रवृत्ते मधुमासेतु प्रतिपद्यु दितेरवौ बन्दयेद्धोलिकाधूलिं सर्वदुःखोपशान्तये ॥ ७५ ॥

इतिश्री मीमांसुकण्ठाभरण दीपिकायां रत्नावल्यां भगीरथ कृतायां तिथिनिर्णयाख्यं प्र० प्र० समाप्तम् ।

## अथ संक्रान्ति प्रकरणम

अथ तिथिनिर्णयानन्तरम् मेषादिषु द्वादशराशिषु क्रमेण संचरतः सूर्यस्यपूर्वस्माद्राशेरुत्तर राशौसंक्रमणम् प्रवेशःसंक्रांतिः अतस्तद्राशिनामपुरस्सरम् तत्सक्रांतिप्रकरणम् व्यपदिश्यते राशयश्चामी मेष बृष मिथुन कर्क सिंह कन्या तुला बृश्चिक धन मकर कुम्भ मीन नामकाः इति ।

बृषकुम्भमृगेन्द्रबृश्चिकाः
कथिता विष्णुपदाभिधावुधैः ।
झषयुग्मसरासनांगनाः
षडशीत्याननसंज्ञकास्तया ॥ १ ॥

तुलाजौविषुवत्संज्ञौनक्तं सौम्यायनंजगुः ।
कर्कंयाम्यायनं प्राहुःपरेवाग्वर्तिवुद्धयः ॥२॥

अथमेषादिराशीनां विष्णुपदादिसंज्ञांवै तालीयानुष्टुप्छन्दोभ्यामाह वृषकुम्भेति वुधैः पण्डितैः वृषकुम्भसिंह वृश्चिकाः विष्णुपदाभिधाः विष्णुपदसंज्ञकाः कथिताः तथातेनप्रकारेण। झषोमीनः युग्मंमिथुनम् शरासनं धनुः अङ्गना कन्या इति एते राशयः षडशीत्याननसंज्ञकाः कथिताः, इत्यर्थः तुलाजौ तुलामेषौ विषुवत्संज्ञौस्तः नक्तंमकरं सौम्यायनं जगुः कथयामासुः कर्कंकराशिं याम्यायनं प्राहुः के प्राहुरित्याह पर इति वाग्वर्तिवुद्धयःवाचिवर्तन्तेतच्छीला इतिवाग्वर्तिन्यः तावुद्धयो येषां तेविद्वांसः इत्यर्थः संज्ञाप्रयोजनंचाग्रे वक्ष्यतिग्रन्थकृत् तदुक्तं वसिष्ठेन झकर्कटसंक्रान्तीद्वे उदगूदक्षिणायने। विषुवेतु तुलामेषौगोलमध्ये ततोऽपराः कन्यायांमिथुने मीने धनुष्यपिरवेर्गतिः षडशीति मुखाप्रोक्ताः। षडशोगुणैः फलैः वृषवृश्चिकसिंहेषु कुम्भे चैवखेगतिः। एतद्विष्णुपदंनाम विषुवादधिकं फलैरिति माधवेस्पष्टम् ॥ १ ॥ २॥

भास्वत्संक्रान्तिकाला
दुभयत उदिताभूपनाड्यः सुपुण्याः
पूर्वं प्राचेन्निशीयाद्
भवति निशिसदा पूर्वघस्रोत्तरार्द्धम्।
पूण्यंचेदूर्ध्वमस्ता
दभिदधति परेवासरे पूर्व मर्द्धम्

सम्पूर्णेचेन्निशीथेदिनमिह सुधियः
पूर्वमप्युत्तरञ्च ॥ ३ ॥

अथ संक्रान्ति समयः सूक्ष्मोदुर्गेयः पिशितेक्षणैः, इतिदेवलोक्ते, अतो मुख्यकालाभावेगौण कालेऽपि कार्य्यंवचनप्रामाण्यात् इतिन्यायेन संक्रान्ते स्थूलकालं स्रग्धरावृत्तेन दर्शयति भास्वत्संक्रान्तीति भास्वान् सूर्य्यः, तस्यसंक्रान्तिकालात् सूर्यसंक्रमण [समयात् भास्वत्संक्रान्तिमारभ्य उद्यतःपूर्वस्मिन् परस्मिन् च भूपनाड्यः शोडशनाड्यः सुपुण्याः शोभन पुण्यदायिकाः, उदिता कथिताः तदाहवसिष्ठः दिनपति संक्रमणात्प्राक् षोडशनाड्यश्चपुण्यकालः सः । परतः षोडशानाड्यः सर्वत्रस्नानदान कार्य्येषु। ज्योतिर्विदाभरणेऽपि आसांपराश्चनपराहि नाडिकाः संक्रान्ति कालान्मिहिरस्य षोडश पुण्यास्तदाभ्यर्णवती घटीस्मृताः तस्यातिपुण्या खलु या भवन्ति सा, इति चेद्यदिनिशीथादर्द्धरात्रात् ( अर्द्धरात्र निशीथौद्वौ ) इत्यमरः पूर्वंसा भास्वत् संक्रान्तिः निशिरात्रौ भवतितत्पूर्व घस्रोत्तरार्द्धम् प्रथमदिनोत्तरार्द्धं पुण्यं पुण्यदायकम् चेद्यदि अस्मान्निशीथात् ऊर्ध्वमुपरिष्टात् रविसंक्रमणं तदापरेवासरे द्वितीय दिने पूर्वम् पूर्वार्द्धमितियावत् पुण्यम् पुण्यदमिति अभिदधति वदन्ति बुधा इति शेषः तदुक्तं ब्रह्म सिद्धान्ते भवनान्तं विम्बमध्यं रात्रार्द्धात्प्रागुदेतिचेतिस्नानदानादिमध्याह्नात् कुर्य्यादूर्ध्वंगते-दिन इति रात्रार्द्धादुपरिक्षेत्रं यातिचेदन्यथा रविः अन्यगामिनि मध्याह्नात् पूर्वेस्नानादि पुण्यदम् इह सम्पूर्णे निशीथे संक्रमणंचद्यदिभवति तदासुधियः पण्डिताः पूर्वदिनं प्रथमाहः उत्तरं पर दिनञ्च पुण्यं पुण्यदमभिदधति कथयन्ति अपिशब्दश्चार्थेन तदुक्तंज्योतिर्विदाभरणे निशिथगोयदिभास्कर संक्रमणेदिन

युगं जगुर्दुर्वृषवत्सलम् इति संग्रहेतु विशेषउक्तः प्रागूर्ध्वादश पूर्वतः षडवनिः तद्वत्परा पूर्वतः त्रिंशत्षोडशपूर्वतोऽथ परतः पूर्वाः पराःस्युर्दश । पूर्वाषोडशचोत्तरा ऋतु भुवः पश्चात्तृ-वेदाः पुनः पूर्वाःषोडश उत्तरा पुनरथो पुण्यास्तुमेषादितः अस्यार्थः मेषेप्राक् ऊर्ध्वंच दशघटिकाः पुण्यकालः । वृषे पूर्वाः षोडश मिथुनेपराः षोडश कर्के पूर्वास्त्रिंशत् सिंहेपूर्वाः षोडश कन्यायांपराः षोडश तुलायाम् प्राक् ऊर्ध्वंश्चदश वृश्चि पुर्वाः षोडश धनुषि पराः षोडश मकरे चत्वारिंशतपराः इदञ्च हेमाद्रि मतेनोक्तम् माधवमतेत्वत्रपराः विंशतिः पुण्याः कुम्भेपूर्वाषोडश मीने पराः षोडशेति ॥ ३ ॥

याम्यायनं चेदुदयाद्रवेः प्राक्
पुण्यंतदा पूर्वदिनं निरुक्तम् ।
सौम्यायनंत्वस्त मतीत्यजातं
पुण्यंतदावासरमुत्तरंस्यात् ॥ ४ ॥

अथेन्द्र वज्रया याम्य सौम्यायनयोः पुण्यंकालं विशिनष्टि याम्येति चेद्यदिरवेः सूर्य्यस्योदयादाविर्भावात् प्राक्पूर्वं याम्या-यनं कर्कसंक्रान्तिश्चेत्तदा पूर्वदिनम्प्रथमवासरः पुण्यं पुण्यवत् निरुक्तम् कथितम् । अथ सौम्यायनं मकरसंक्रमणमस्तम् अस्तकाल मतीत्यातिक्रम्य जातं तदोत्तरं वासरं पुण्यंपुण्यव-त्स्यादिति तदाहवृद्ध गार्ग्यः यदास्तमनवेलायांमकरे यातिभा-स्करः । प्रदोषेचार्द्ध रात्रेत्रा स्नानंदानं परेऽहनि इति अर्द्धरात्रे तदूर्ध्वंवा संक्रान्तौ दक्षिणायने पूर्वमेवदिनं ग्राह्यं यावन्नोदयते रविः । वृद्धवसिष्ठः । अह्निसंक्रमणेपुण्यमहः कृत्स्नं प्रकीर्तितम् रात्रौ संक्रमणे भानोर्दिनार्द्धंस्नानदानयोः इति ॥ ४ ॥

अर्द्धोदिताद्भास्करबिम्बतः प्राक्
संध्येतिनाडीत्रयमुक्तमार्य्यैः।
अर्द्धास्ततोभास्कर बिम्बतस्तु
संध्येतिंतिस्त्रोऽभिहिताःपरस्तात्॥ ५ ॥

अथेन्द्रवज्रया सन्ध्या लक्षणमाह-अर्द्धोदितादिति-अर्द्धञ्च तदेवोदितम्-अर्द्धोदितम्-तस्माद्भास्कर बिम्बतः सूर्य्यमण्डलात् प्राक् प्रथमम्-आर्य्यैःविद्वद्भिः नाडीत्रयंतिस्रोनाड्यः संध्याप्राक् सन्ध्याकालमित्युक्तम्-तथा अर्द्धास्तात् भास्कर बिम्बात् परस्तात् परत्र तिस्रोनाड्यः, नाडीत्रयं सन्ध्यासायं सन्ध्या अभिहिता कथिता इति तदाह नारदः। अर्द्धास्तमन सन्ध्याहिघटिकात्रय सम्मिता तथैवार्द्धोदयात्प्रातर्घटिकात्रय संमितेति॥ ५॥

प्रातःसन्ध्याकाले यातेयाम्यायनेपरंपुण्यम्।
सायं सन्ध्याकाले प्रोक्तंसौम्यायने दिनंपूर्वम्॥ ६ ॥

अथ आर्य्ययाप्रातः सायंसंध्यागतयास्यसौम्यायनसंक्रान्ति पुण्यकालम्प्रदर्शयति-प्रातरिति-प्रातः संध्याकालेपूर्वसंध्यायाम् याम्यायनेकर्कायने यातेप्राप्तेसतिपरंपरदिनंपुण्यम्प्रोक्तम्-सायं संध्याकाले सायंसंध्यायाम् सौम्यायनेमकरायणे यातेसतिपूर्वपूर्वंदिनं प्रोक्तम् तदाहनारदः सूर्य्यस्योदयसंध्यायां यदि याम्यायनं भवेत् तदोदयादहः पुण्यंपूर्वाहः पूर्वतोयदि। सूर्यास्तमन संध्यायां यदि सौम्यायनं भवेत् तदहः पुण्यकालः स्यात् परतश्चोत्तरेऽहनि इति॥ ६॥

याम्यायने विष्णुपदेचपूर्वा
नाड्यः सुपुण्याः सतुलेतुमेषे।

मध्याःपराःस्युःषडशीतिवक्त्रे
सौम्यायने चाभिहिताः सुधीभिः ॥ ७ ॥

अथेन्द्रवज्रया । पुण्यकाल विशेषोनिर्णीये याम्यायन इति याम्यायनेकर्क संक्रान्तौ विष्णुपदे सिंहालि वृषकुम्भे च पूर्वाः प्रथमानाड्यः षोडशघटिकाःसुपुण्यदाः अतिपुण्यदाःस्युर्भवन्तीति सतुलेतुलासहिते मेषेषु मध्याः मध्यवर्तिन्यः षोडशघटिकाः अतिपुण्यदाः मेषे तुलायां च संक्रान्ति कालात् पूर्वमष्टौघटिकाः परतश्चाष्टौघटिकाः पुण्यकाल इतिफलितोऽर्थः षडशीतिवक्तेतु धनुर्मीनकन्या मिथुने सौम्यायने मकरे च सुधीभिः पण्डितैः परानाड्योऽन्तिमषोडशघट्यः सुपुण्यदा अतिपुण्यदा अभिहिताः कथिता इत्यर्थः तदाह श्रीपतिः याम्यायने विष्णुपदे तदादौ दानाद्यनन्तं विषुवेचमध्ये वदन्त्यतीतेषडशीतिवक्त्रे महर्षयः खल्वयने च सौम्ये एतत्सर्वं संक्रान्ति निर्णयवचनम् निशिसंक्रान्तिवचनम् दिवासंक्रान्तिश्चेत्तदा वसिष्ठ वचनम् अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्तितम् रात्रौसंक्रमणे भानोर्दिनार्द्ध स्नानदानयोः अर्द्धरात्रादधस्तस्मिन्मध्याह्नस्योपरिक्रिया । ऊर्ध्वंसंक्रमणेचोर्ध्वमुदयात्प्रहरद्वयम् पूर्वोविदर्द्ध रात्रेतुयदासंक्रमते रविः प्राहुर्दिनद्वयं पुण्य मुक्त्वा मकर कर्कटौ इति अह्नियदासंक्रान्तिर्भवति तदाकृत्सायाह्नः पुण्यत्वम् रात्रौ संक्रमणे पूर्वोत्तर दिनार्द्धयोः पुण्यत्वमविदधतावचनेनार्थाद्रात्रौ स्नानदानादिकंम्प्रतिषिध्यते नैवम् अयनव्यतिरिक्तेषु दशसु संक्रमणेषुरात्रिगतेषु योनिर्णयस्तंसर्वंपर्युदसितुंतद्वचः शेषः, मुक्त्वा मरकर्कटावितिवर्णितः । यायास्सन्निहितानाड्यस्तास्ताः पुण्यतमाः इत्युक्तेन सामान्य वचनेन रात्रिसंक्रमणेषुरात्रावेवानुष्ठानं प्रशक्तम् तदपोह्यदशसु संक्रान्तिषु दिवानुष्ठानं विधाय

मकरकर्कटयोस्तत्पर्युदासेसति पूर्वप्रशक्तंरात्रावनुष्ठानमेव पर्यवस्यति । एवं सति रात्रौस्नान मत्युपगच्छतोयाज्ञवल्क्य वचनस्यापिकश्चिद्विषयः सम्पद्यते तथाच याज्ञवल्क्यः । राहु दर्शन संक्रान्ति विवाहात्ययवृद्धिषु स्नानदानादिकं कार्यंनिशि काम्यव्रतेषुच इति सुमन्तुरपि रात्रौस्नानं न कुर्वीत दानंचैव विशेषतः नैमित्तिकं च कुर्वीत स्नानंचरात्रिषु यज्ञेविवाहे यात्रायां तथा पुस्तकवाचने दानान्येतानि शस्तानि रात्रौ देवालये तथा ग्रहणोद्वाहसंक्रान्तियात्रार्ति प्रसवेषुच श्रवणे चेति हासस्य रात्रौदानं प्रशस्यत इति ननुयथोक्तपर्युदासानु-गृहीतैः पुण्यतमत्ववादिदेवलयाज्ञवल्क्यसुमन्तुवचनैर्मकरकर्कट योर्निश्यनुष्ठान प्रापणं शास्त्रांतरेण विरुद्धम् तथा च भविष्योत्तरे मिथुनात्कर्क संक्रान्तिर्यदिस्यादंशुमालिनः । प्रभाते वानिशीथेवा कुर्यादहनि पूर्वतः कार्मुकंतु परित्यज्यझषं संक्रमते रविः प्रदोषे चार्द्ध रात्रेवा स्नानंदानं परेऽहनि इति वृद्ध गार्ग्योऽपि यदास्तमनवेलयां मकरंयातिभास्करः प्रदोषेचार्द्ध-रात्रेवा स्नानंदानं परेहनीति अर्द्धरात्रे तदूर्ध्वंवा संक्रान्तौ दक्षिणायनम् पूर्वमवेदिनंग्राह्यं यावन्नोदयते रविरिति मैवम् पर्युदासानुगृहीतवचनानामनर्थक्यात् तस्माच्छास्त्रद्वयेन विकल्पप्राप्तौ तत्तद्देश प्रसिद्धशिष्टाचरेण व्यवस्था द्रष्टव्या इति एतासु संक्रान्तिषु होम स्नान दानादिक मन्वयव्यतिरेका भ्यां शातातप आह संक्रान्तौ यानिदत्तानिहव्यकव्यानिदातृभिः तानिनित्यंददात्यर्कः पुनर्जन्मनिजन्मनि रविसंक्रमणे पुण्येन स्नायाद्यदिमानवःसप्तजन्मसुरोगीस्याद् दुःखभोगीहिजायत इति माधवः इतिमीमांसुकण्ठाभरण दीपिकायायाम् रत्नावल्यां भगी-रथकृतायाम्संक्रान्ति निर्णयाख्यं द्वितीयं प्र० स० ॥ ७ ॥

## अथ योगप्रकरणम्

श्रुतिपात दिनेश्वरैर्दिवा
सहितामा यदि पौषमाघयोः ।
उपराग शतोपमस्तदा
कथितोऽर्द्धोदयएषदुर्लभः ॥ १ ॥

अथ वैतालीयवृत्तेनार्द्धोदय योगंनिर्णेतुमारभते श्रुतिश्च पातश्च दिनेश्वरश्चतेतैः श्रुतिः श्रवणः पातः पातयोगः दिनेश्वरस्सूर्यवारः तैस्सहिता पौषमाघयोरमा अमावस्या यदि भवति तदाएषोऽर्द्धोदयनाम योगः कथितः कीदृशः उपरागशतोपमः उपरागशतमुपमायस्य-अतएवदुर्लभः तदुक्तंमदनरत्ने-अमार्कपातश्रवणैर्युक्ताचेत्पौषमाघयोः । अर्द्धोदयःसविज्ञेयः कोटिसूर्यग्रहैस्समः—दिवैवयोगः शस्तोऽयंनतुरात्रौकदाचन इति हेमाद्रिः दिवैवयोग इत्यर्द्धमन्यनिबन्धेष्वभावा न्निर्णयामृत मात्रोक्तेः निर्मूलमेव तेनहेमाद्यादि मतेरात्रावपिभवति—इति निर्णयसिन्धौ तएववदन्ति-स्कान्दे अर्द्धोदयेतुसम्प्राप्ते सर्वंगंगा समंजलम्-शुद्धात्मानोद्विजास्सर्वे भवेयुर्ब्रह्मसंमिताः—यत्किंचिद्दीयतेदानंतद्दानंमेरुसन्निभम् इति ॥ १ ॥

अथ केनचिदेषु चेदभवेद्यदिहीनापिदैवतातिथिः ।
भवतीहमहोदयस्तदा सतुनाम्नैवनपुण्यतोमहान् ॥२॥

अथ वैतालीय वृत्तेन महोदययोगोवर्ण्यते-अथेति अथानन्तरम् एषु श्रुतिपात दिनेश्वरेषुमध्ये केनचित् श्रुवादिनेश्वरेण पातेन ही । यदि पितृदैवता तिथिरमाभवति-तदामहोदयः

महोदयनामायोगःस्यात्-इहसतुमहोदयस्तु नाम्नैवनामोच्चारणे-नैवमहान नतुपुण्यतः-अयंभावः अर्द्धोदयशब्दो अर्द्धशब्दोपादानेऽपि यथामहत्पुण्यं तथानमहोदयशब्दोऽस्ति-तथाच विधाविधिशब्दवत् यदृच्छाशब्दोऽयमिति-उक्तश्च-अमार्कपातश्रवणैर्युक्ता चेत्पौषमाघयोः । अर्द्धोदयःसविहेयः किंचित्दूनोमहोदयः इति चतुर्थपादं केचित्पठन्ति इतिस्मृतिकौस्तुभे ॥ २ ॥

बसुदस्त हरीश्वरोरगैः
शशिनावा सहितोविधुक्षयः ।
दिनकृद्दिवसेयदाभवेत्
व्यतिपातोऽभिहितस्तदाबुधैः ॥ ३ ॥

अथ व्यतिपातं वैतालीयवृत्तेनदर्शयति-बसुदस्रेति-बसुर्धनिष्ठादस्रमश्विनी-हरिश्रवणः ईश्वरआर्द्राउरगःश्लेषा-एभिर्नक्षत्रैस्सहितोविधुक्षयोमा शशिना मृगशिरसा वा दिनकृद्दिवसे रविवासरे यदाभवेत् तदाबुधैःपण्डितैः व्यतिपातः तन्नामको योगः-अभिहितः उक्तः उक्तश्चहेमाद्रौ-श्रवणाश्वि धनिष्ठार्द्रानाग दैवतमस्तके अमाचेद्रविवारेण व्यतिपातः सउच्यते—तत्रजप्तं हुतंदत्तंसर्वंकोटिगुणंभवेत्—नागदैवतम्-श्लेषा-मस्तकं मृगशीर्षम् ॥ ३ ॥

चैत्रादौत्रितिथीसितेनच तिथिर्दिक्पूर्णिमेवस्वमे
कृष्णेचाथपुनस्सिते गिरिसुतादुर्गातिथीनौक्रमात् ।
नोश्मस्मुस्तपनस्तनस्तिथिरयो मन्वादयः कीर्तिताः
पुण्येकर्मणिसूरिभिर्निगदिता शश्वत्फलद्धैःशुभाः ४

अथ शार्दूलविक्रीडितेन मन्वादितिथीन् वर्णयति-चैत्राद्याविति चैत्रादौ चैत्रादि मासेक्रमेण वक्ष्यमाणास्तिथयोमन्वादयः सूरिभिः पण्डितैःकीर्तिताः कथिता तद्यथा—चैत्रेसिते शुक्ले तिथिःतृतीय पूर्णिमैमन्वादीभवतः वैशाखेनच अर्थाद्वैशाखेमन्वादिर्नास्ति तत्प्रतिपादनार्थं नचोदितम्-ज्येष्ठशुक्लेतिथिःपूर्णिमा आषाढ़शुक्ले दिवा दशमी पूर्णिमाच-श्रावणे कृष्णेवस्वमे वसुरष्ठमी अमावास्याच अथभाद्रपदे शुक्ले गिरिसुतातृतीया-आश्विनेदुर्गानवमी-कार्तिके तिथीतौ तिथिश्चइनश्च इति विग्रहे पूर्वनिपातस्यानित्यत्वान्नपूर्वनिपातः—तिथिःपूर्णिमा इतोद्वादशी च मार्गशीर्षेनो अर्थान्मार्गेमन्वादिर्नास्ति-पौषेशंभुरेकादशी माघे तपनः सप्तमी फाल्गुनेतिथिः पूर्णिमा कीदृशाः शश्वत फलवृद्धौ सर्वदा फलवृद्धौ पुण्ये कर्माणिशुभाः शुभफलदाइत्यर्थः तथाचोक्तं दीपिकायाम् तिथ्यग्नी नतिथिस्तिथ्याशेकृष्णेभोनलोग्रहः तिथ्यर्कौन शिवोऽश्वोमा तिथीमन्वादयोमधोः—आशा दशमी कृष्णेभः कृष्णाष्टमीमधो श्चैत्रादारम्यैनामन्वादय इत्यर्थः इति

अथयुगादितिथयः।

शुक्लोर्जेखलुनवमीतयातृतीया
वैशाखे तपसिविधुक्षयोऽथभाद्रे
कन्दर्पोऽसितभवईरितायुगाद्या
विद्वद्भिस्तिथयइहक्रमेणसर्वे ५

अथ प्रहर्षिण्या युगादितिथीर्निर्णेतुमाह शुक्लेति शुक्लश्चासौ ऊर्जः इति शुक्लोर्जः तस्मिन् शुक्लेकार्तिके खलुनिश्चयेन नवमी युगादिः तथातेन वप्रकारेण वैशाखे मासि तृतीयातिथिर्युगादिः

तपसिमाघे विद्य क्षयोमाअथभाद्रेऽसितभवाः कृष्णपक्षोत्पन्नः कन्दर्पः त्रयोदशीयुगादिः कृत्त तः कृतयुगमारभ्य विद्वद्भिः पण्डितै रेतेसर्वे तिथय इहास्मिन् शास्त्रे क्रमणे क्रमशः युगाद्यास्तिथयः ईरिताः कथिताः तथा चोक्तं नारदेन कार्तिकेश्रु क्ल नवमी चादिः कृतयुगस्तपसा त्रेतादिर्माधवे शुक्ला तृतीया पुण्य साम्मिता। कृष्णा पञ्चदशीमाघे द्वापरादिरुदाहृता कल्पादिस्स्यात्कृष्णपक्षे नभस्येव त्रयोदशी ॥ ५ ॥

अथ वारुणी योगः ।

मधावसितपक्षगा वरुणभेन
युक्ताशनौ तिथिः कुसुम
सायकस्य यदिसा महावारुणी ।
शुभेनसहितापिचेद्भवति
महायुग्मयुक् कृतार्थयति
मज्जनात्सुरसरिज्जले मानवान् ॥ ६ ॥

अथ पृथ्वी छन्दसा महावारुणीयोगं निर्णेतुमाह मधाविति मधौचैत्रे असितपक्षगा कृष्णपक्षगामिनी कुसुमसायकस्य तिथिः त्रयोदशी वरुणभेन शततारयायुक्ता सतीशनौ शनिवारे भवेत् तदा सा महावरुणीस्यात् अथ शुभेन शुभयोगेनचेद्यदियुक्ता पूर्वोक्त गुणविशिष्टा त्रयोदशी महायुग्मयुक महच्छब्दद्वयपूर्वा अर्थान्महामहावारुणोसा भवति सामहावारुणी सुर सरिज्जले गंगाजले मज्जनात्स्नानमात्रादेव मानवान् मनुजातान् कृतार्थयति कृतार्थान् करोतीत्यर्थः अत्रायंविसदोऽभिप्रायः मधौचैत्रेऽसिते त्रयोदशी शनौचेत्तदावारुणी स्यात् शततारयायुक्ता महावारुणी

स्यात् शुभान्विता चेन्महामहावारुणीति तदुक्तं स्कान्दे वरुणेन समायुक्ता मधौकृष्णा त्रयोदशी गंगायां यदि लभ्येत शतसूर्यग्रहैः समाइति । पुनस्तत्रैव शनिवार समायुक्ता सा महावारुणी स्मृता गंगायां यदि लभ्येत कोटिसूर्यग्रहैस्समा इति । पुनः स्कान्दे शुभयोगसमायुक्ता शनौशतभिषायदि महामहेतिविख्याताः त्रिकोटि कुलमुद्धरेत् । इतिमहावारुणीयोगः अथप्रसंगात् योगान्तरमपि लिख्यते-तत्रसोमवतीयोगः समयमयूखे-अमायां सोमवारयोगे कपिलधारातीर्थे श्राद्धमुक्तंकाशीखण्डे अमासोमसमायोगे श्राद्धंयद्यत्रलभ्यते तीर्थे कपिलधारेऽस्मिन् गया पुष्करेणकिम्-दिव्यान्तरिक्षभौमानियानितीर्थानि सर्वशः तान्यत्र निवसिष्यन्ति दर्शे सोमदिनान्विते इति अथगोविन्दद्वादशी योगः । ब्राह्मे फाल्गुनस्यापरेपक्षे कुम्भस्थेदिवाधिपे । जीवे धनुषियोगेच शोभने रविवासरे—पुष्यक्षेयदिसम्पूर्णा गोविन्द द्वादशी मता गोविन्द द्वादशीम्प्राप्य गच्छेच्छ्रीपुरुषोत्तमम्—विनायासेन राजेन्द्रमुक्तःसायुज्यमाप्नुयात् इति तिथितत्वे अथ ग्रहणविचारः ग्रहणेकर्तव्यमाह वृद्धवसिष्ठः गंगातोयेतुसम्प्राप्ते इन्दोःकोटीरवेर्दश—गवांकोटिप्रदानेन सम्यग्दत्तेन यत्फलम् गंगास्नाने तत्फलेस्याद्राहु ग्रस्तेनिशाकरे दिवाकरे पुनस्तत्र दशसंख्यमुदाहृतम्—व्यासोऽपि इन्दोर्लक्षगुणंपुण्यं रवेर्दश गुणंततः गंगातोयेतुसम्प्राप्ते इन्दोःकोटीरवेर्दश गंगाव्यतिरिक्त महानदीतोयेलक्षगुणत्वमभिहितम् ब्रह्मपुराणे तिस्रोनद्यो महापुण्याः वेणीगोदाच जाह्नवी गांहरीशांघ्रिकात्प्राप्ता गंगा इतीह कीर्तिताः—ब्रह्मपुराणेतुविशेषः गोदावरी भीमरथी तुङ्गभद्राचवेणिका तापीपयोष्णीविंध्यस्य दक्षिणेतुप्रकीर्तिता भागीरथीनर्मदा च यमुनाच सरस्वती विशोकाच वितस्ता च विन्ध्यस्योत्तरतस्तथा । इति मासविशेषेनदी विशेषोदेवीपुराणे

कार्तिके ग्रहणं श्रेष्ठगंगा यमुन संगमे मार्गेतुग्रहणंस्प्रोक्त देविकायां महामुने पौषेतुनर्मदापुण्यामाघेसन्निहिताशुभा फाल्गुनेवरुणापुण्याचैत्रे पुण्या सरस्वती वैशाखेतुमहापुण्या चन्द्रभागासरिद्वरा ज्येष्ठेतुकौशिकी पुण्या आषाढ़ेतापिकानदी—श्रावणे सिन्धुनामातु तथाभाद्रेतुगण्डकी–अश्विन्ये सरयूश्रेष्ठा तथापुण्यातुनर्मदा–ग्रहणे प्राक्पश्चाद्भोजननिषेधः सूर्यग्रहेतु नाश्नीयात्पूर्वंयाम चतुष्टयम् चन्द्रग्रहेतु यामास्त्रीन्वालवृद्धातुरंविना। इति तत्र वश्राद्धविधिः चन्द्रसूर्य्यग्रहे यस्तुश्राद्धो विधिवदाचरेत् तेनैवसकला पृथ्वीदत्ताविप्रस्यवैकरे—वार विशेषेयोगफलातिशयमाह व्यासः रविग्रहस्सूर्य्यवारे सोमेसोम ग्रहस्तथा चूड़ामणिरितिख्यातस्तदानन्तफलंभवेत्—वारेष्वन्ये पुयत्पुण्यंग्रहणे चन्द्रसूर्य्ययोः तत्पुण्यंकोटिगुणिते ग्रासेचूड़ामणौस्मृतम्—अथकुम्भयोगव्यवस्था विष्णुपुराणे विवादेकाश्यपेयानां यत्रयत्रावनिस्थले। कलशोन्यपतत्तत्र कुम्भःपर्वतदोच्यते–सूर्येन्द्रगुरुसंयोगस्तद्राशौ यत्रवत्सरे। सुधाकुम्भप्लवेभूमौ कुम्भोभवतिनान्यथा—देवानांद्वादशाहोभिर्मर्त्यैर्द्वादश वत्सरे जायन्ते कुम्भपर्वाणि तथाद्वादशसंख्यया तत्राघनुत्तये नृणां चत्वारिभुविभारते अष्टौलोकान्तरे प्रोक्तादेवैर्गम्यानचेतरैः पृथिव्यांकुम्भयोगस्य चतुर्द्धभिदउच्यते चतुस्थलेनिपतनात्सुधाकुम्भस्यभारते—गंगाद्वारे प्रयागेच धारागोदावरी तटे। कुम्भाख्येःहियोगोऽयंप्रोच्यतेशङ्करादिभिः—तान्येतियः पुमान् योगेसोऽमृतत्वायकल्पते। देवानमन्ति तत्रस्यात् यथारङ्काधनाधिपान्–अश्वमेधसहस्राणिवाज पेयशतानिच लक्ष प्रदक्षिणापृथ्व्याःकुम्भस्नानेनतत्फलम्—प्रयागे मकरेच दिवानाथे वृषराशिस्थितेगुरौ। प्रयागेयेगोवैमाघमासे विधुक्षयेपद्मिनीनाय केमेषे कुम्भराशिगतोगुरूः गंगाद्वारेभवेद्योगः कम्भनामातदो

त्तमः-सिंहेसूरिःशशीसूर्य्यः मेषेदामोदरेयदा धारायांच तदा कुम्भो जायते खलुमुक्तिदः करकेगुरुस्तथाभानुः चन्द्रेचन्द्रक्षयस्तथा गोदावर्यां तदाकुम्भो जायतेऽवनिमंडले—मकरेच दिवानाथे ह्यजगेच बृहस्पतौ कुम्भयोगो भवेत्तत्र प्रयागे ह्यतिदुर्लभः माघ मेषगते जीवे मकरे चन्द्रभास्करौः इतिकुम्भपर्व्व समाप्तः ।

सन्निर्मलं सज्जन चित्तरञ्जनं
गुणोपपन्नंस्मृति मल्लिकोद्भवम् ।
मीमांसुकण्ठाभरणं भवत्वदो
मुदेऽम्बिकायाश्च महेश्वरस्य ॥ ८ ॥

अथ ग्रन्थादौ ग्रन्थ मध्ये ग्रन्थान्ते च मङ्गलमाचरणीय मितिशिष्टव्यवहाराभिज्ञेन ग्रन्थकर्त्रा ग्रन्थसौष्ठवं वर्णयन्नाशीर्वादात्मकं मङ्गलमुपजात्यालिष्यते सन्निर्मलमिति सत्समीचीनं धर्मप्रतिपादकत्वात् निर्मलंवाह्याभ्यान्तर मल शून्यम् सज्जनानां धर्मतत्पराणाम् मनोमुद्करम् गुणैः तिथिसंक्रमणयोगात्मकै रुपपन्नम् युक्तम् स्मृतिमल्लिकोद्भवम् स्मृतिमल्लिकायाउद्भवोयस्यतत् अदएतत् मीमांसुकण्ठाभरणम् विचारवद्ग्रीवा भूषणम् अम्बिकायाः पार्वत्याः महेश्वरस्य शिवस्य च मुदे आनन्दायभवतु अस्तु इति ॥ ८ ॥

तातोयस्य कवीन्द्र मूर्धमुकुटालङ्कारहीरायितः ।
श्रीताराचरणारविन्दमधुपः श्रीदेवदत्तोऽभवत् ॥
तेनेदं विदुषांमुदे सुरुचिरंतेने सुधीरञ्जनम् ।
श्रीमद्रामदयालुनातदधुना विद्वत्कृपामृच्छतु ॥ ९ ॥

इति श्री मत्पण्डितदेवदत्तात्मज रामदयालु विरचिते मीमांसुकण्ठाभरणे योगनिर्णयाख्यं तृतीयप्रकरणं समाप्तम् ।

अथ शार्दूल विक्रीडित छन्दसा ग्रन्थ निर्मातुर्वंशवर्णनम् तातोयस्येतिकवीन्द्र मूर्धमुकुटालंकार हीरायितः श्रीताराचरणारविन्दमधुपः श्रीदेवदत्तो यस्यतातोऽभवत् तेन श्रीमद्रामदयालुना विदुषांमुदे सुरुचिरं सुधीरञ्जनम् इदं मीमांसुकण्ठाभरणं तेने तत्पूर्वोक्तम् अधुना, इदानीं विद्वत्कृपाम्, ऋच्छतु प्राप्नोतु ॥ ६ ॥ श्रीमद्रामफलात्मजोऽथहनुमान् नाम्नापि चाप्यर्थतो धीरोऽथो पवनात्मजेनसमतामेतिस्मसच्छास्त्रवित् । यस्या गाधमहत्तया जलनिधिर्गाधीकृतः सज्जनैः श्रीताराचरणारविन्द मनिशंध्यायन्नभूत्सत्यवाक् । तस्मादत्रभगीरथेन विदुषा जातेन याकारिवै मीमांसोर्मनसामुदं विदधतीसेयं च रत्नावली संक्षिप्ताक्षरकोमलार्थपदयुक् श्रीनीलकंठस्य च संवद्धारुचिरंगले विजयतां विद्वत्कृपातोमया द्विसप्तरत्नभूवर्षे मीनार्के माधवेऽसिते सोस्कन्दतिथावस्या विवृतितामचीकरम् । इति श्रीमीमांसुकंठाभरणार्थ दीपिकायां रत्नावल्यां भगीरथ कृतायां योग निर्णयाख्यांतृतीयं प्रकरणं समाप्तम् ।

॥ इति समाप्तोऽयं ग्रन्थः ॥



